August-September 1927.

THE

# CHOWKHAMBÁ SANSKRIT SERIES,

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

## NOS. 356 & 357.

॥ श्रीः ॥

सविशेषनिर्विशेषकृष्णस्तवराजः

श्रीमन्निम्बार्काचार्यप्रणीतः।

श्रीमद्धरिव्यासदेवपादशिष्यश्रीमत्पुरुषोत्तमदासकृत-

श्रुत्यन्तकल्पवल्लीव्याख्यासहितः।

Savis'eṣa Nirvis'eṣa Krisṇastavarāja

OF

S'RĪ NIMBĀRKĀCHĀRYA

with commentary

[...]TYANTAKALPAVALLĪ

[...]ushottama Prasâda Vaiṣṇava.

FASCICUL II. 1–2.

PRINTED-PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Vidya Vilas Press, North of Gopal Mandir, Benares.*

1927

Agents:

1 Luzac & co, Booksellers,
LONDON.

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

चौखम्बा-संस्कृत-ग्रन्थमाला

( ग्रन्थ संख्या ६५ )

॥ श्रीः ॥

सविशेषनिर्विशेषकृष्णस्तवराजः

श्रीमन्निम्बार्काचार्यप्रणीतः।

श्रीमद्धरिव्यासदेवपादशिष्यश्रीमत्पुरुषोत्तमदासकृत-

# श्रुत्यन्तकल्पवल्लीव्याख्यासहितः।

उरई गवर्न्मेंट हाईस्कूल संस्कृतभाषाध्यापकेन व्याकरणाचार्य-

नेने गोपालशास्त्रिणा संशोधितः परिष्कृतश्च ।



प्रकाशकः-

जयकृष्णदास-हरिदासगुप्तः--

चौखम्बा संस्कृत सीरीज आफिस, विद्याविलास प्रेस,

गोपालमंदिर के उत्तर फाटक, बनारस सिटी ।

१९८४

श्रीगुरुः शरणम् ।

श्रीमन्निम्बार्कविरचितकृष्णस्तवराजस्य

श्रीमत्पुरुषोत्तमदासविरचितश्रुत्यन्तकल्पवल्लीसहितस्य

# भूमिका ।



यदानन्दलवेनैव जगदानन्दमश्नुते ।
तं वन्दे प्रत्यगात्मानमसङ्गं नन्दनन्दनम् ॥ १ ॥

अथाहोरात्रसत्यानृतरागद्वेषशीतोष्णसुखदुःखभावाभावधर्माधर्माद्यनेकविधपरस्परप्रतिद्वन्द्विपदार्थपरिपूरिते कदापि केनापि केनचिदपि प्रकारेणाचिन्तनीयेऽनिर्वचनीये विचित्रेऽस्मिन्संसारे संचरतां सुखदुःखमयानां देवासुरमानुषाणां परमसुखावाप्तिपूर्वकात्यन्तिकदुःखनिवृत्त्यर्थं स्वभावत एवास्ति सततमुद्योग इति विदितमेव सर्वेषाम् । तत्र परमसुखावाप्तिः केनोपायेन केनचाऽऽत्यन्तिकदुःखनिवृत्तिरिति नाद्यापि निश्चितम् । प्राणिनश्च यस्मिन् कस्मिन्नपि दुःखसाधने एवापातरमणीयतां पश्यन्तः सुखसाधनत्वभ्रान्त्या प्रवर्तमाना दृश्यन्ते । तांश्च दुःखमहोनिधिनिमग्नान् इतस्ततो भ्राम्यतो जनान् उद्धर्तुं मातापितृसहस्रेभ्योऽप्यधिकवात्सल्यशालिनी श्रुतिर्मन्दमध्यमोत्तमाधिकारिजनान् निरीक्ष्य कर्मकाण्ड–उपासनाकाण्ड–ज्ञानकाण्डानि यथाधिकारं न्यरूपयत् । तत्र कर्मकाण्डश्रुत्यर्थनिर्वचनाय मन्दाधि-

कार्युद्देशेन प्रवृत्तः श्रीपरमकारुणिको भगवान् जैमिनिर्यावद्वेदार्थविचाररूपां षोडशाध्यायीं पूर्वमीमांसां सूत्रात्मनोपनिबबन्ध बोधयामास च विधिमन्त्रनामधेयनिषेधार्थवादात्मके वेदे "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्यादिना विधिवाक्यानामेव प्राधान्यं तच्छेषत्वं चान्येषामिति ।

"ज्योतिष्टोमेन स्वर्गकामो यजेत" "राजा राजसूयेन यजेत स्वाराज्यकामः" "श्येनेनाभिचरन् यजेत मर्त्यकामः" इत्यादिकर्मकाण्डश्रुतयस्तत्तद्विषयसम्पर्कजन्यानित्यस्वाराज्यादिसुखाभिलाषिणो वर्णाश्रमाभिमानिनो रागद्वेषादिमतः कामुकानेवाऽधिकृत्य प्रवृत्ता इति तासां मन्दाधिकारित्वं सुस्पष्टमेव ।

उपासनाकाण्डश्च "ओमित्यक्षरमुद्गीथमुपासीत" "ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे" "य एतदेवं विद्वान् साधुसामेत्युपासते" "अन्नं ब्रह्मेत्युपासीत" "मनो ब्रह्मेत्युपासीत" "आत्मानमेव प्रियमुपासीत" इत्याद्युपासनावबोधकश्रुतिवाक्यकदम्बो मध्यमाधिकार्युद्देशेन प्रवृत्तः । गीताशास्त्रमपि परमप्रियमर्जुनं मध्यमाधिकारिणमेव मत्वा भगवता श्रीवासुदेवेनोपदिष्टम् । अतएवावसाने—

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥
( गी० अ० १८ )

इति सर्वधर्मपरित्यागपूर्वकस्वात्मपरायणत्वबोधनेनोपासनमेवोक्तं तत्रेति केचिन्मन्यन्ते ।

उत्तमाधिकार्युद्देशेन च "एकमेवाद्वितीयं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" "तत्त्वमसि" "ब्रह्म सत्यं जगत् मिथ्या" इत्यादयः श्रुतयो ज्ञानकाण्डभूताः प्रवृत्ताः । तासां चाऽतिगम्भीरार्थतया सहजतोऽर्थप्रतिपत्तेर्दुष्करतया वादिविप्रतिपत्त्या च तदीयतत्त्वार्थज्ञानस्यासम्भावितत्वमिव भवेदिति महर्षिर्भगवान् श्रीबादरायणः शारीरकमीमांसासूत्राण्यसुसूत्रयत् चतुर्भिरध्यायैः ।

इयञ्च चतुरध्यायी कामधेनुरिव तत्तद्व्याख्यातॄणामभिलषितमर्थं समर्पयतीति अद्वैत–द्वैत–विशिष्टाद्वैत-शुद्धाद्वैत–शक्तिविशिष्टाद्वैत–द्वैताद्वैत–अचिन्त्यद्वैताद्वैत-इत्यादि सिद्धान्तास्तत्तदाचार्याणां प्रसिद्धिमागताः । सर्वथाऽपि ब्रह्मविचारो मोक्षसाधनं तत एव च परमसुखावाप्तिः आत्यन्तिकदुःखनिवृत्तिश्चेति सर्वाभिमतम् । तत्र श्रीमच्छङ्कराचार्याणां पूज्यपादानामद्वैतमतं सिद्धान्तभूतं, मध्वविष्णुस्वामिनां द्वैतमतं, शुकरामानुजश्रीकण्ठानां विशिष्टाद्वैतमतं, वल्लभस्य शुद्धाद्वैतं, श्रीपतेः शक्तिविशिष्टाद्वैतं, भास्करनिम्बार्कयोर्द्वैताद्वैतं, बलदेवस्य चाऽचिन्त्यद्वैताद्वैतमिति । तेषां सम्प्रदायाश्च- अद्वैतसम्प्रदायः श्रीशङ्कराचा-

र्याणां, माध्वसम्प्रदायश्च मध्वाचार्यविष्णुस्वामिनोः, भागवत-सम्प्रदायश्च श्रीशुकदेवस्य, वैष्णवसंप्रदायः श्रीरामानुजानां, शैवसम्प्रदायश्च श्रीकण्ठानां, वल्लभसम्प्रदायो वल्लभाचार्याणां, लिङ्गायतसम्प्रदायः श्रीपतीनां, चैतन्यसम्प्रदायश्च बलदेवानां, निम्बार्कसम्प्रदायश्च श्रीनिम्बार्काणामाचार्यपादानामिति क्रमशो वर्तन्ते ।

श्रीमन्निम्बार्काणां श्रीभास्कराचार्याणां च द्वैताद्वैतमतं, परमवान्तरो भेदो विद्यते । तत्र श्रीभास्कराचार्या बद्धदशायां भेदो मुक्तदशायामभेद इति मन्यन्ते निम्बार्कास्तु उभयत्रापि भेदोऽभेदश्चेति । भेदाभेद इति द्वैताद्वैतपर्यायः ।

अयं खलु निम्बार्कसंप्रदाय एकादशशताब्दीतः पञ्चदशशताब्दीपर्यन्तं प्रचुरतराऽस्मिन् उत्तर( बृन्दावन )भारते बङ्गदेशे चासीत् । इदानीमपि तत्र क्वचित् समाजे वर्तते । अस्य प्रवर्तकः श्रीमदनुगृहीतनामधेयो नियमानन्दः जयन्त्या अरुणिमुनेश्च पुत्रः श्रीमद्भगवत्पुरुषोत्तमहस्तविलसितसुदर्शनावतारः सनकादिमहर्षिभ्यो ब्रह्मज्ञानं दातुं हंसरूपेणावतीर्णस्य श्रीमद्भगवतोऽनुचरस्य महर्षिनारदस्य शिष्य आसीत् । अस्य समयः—

विष्णुस्वामी प्रथमतो निम्बादित्यो द्वितीयकः ।
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजस्तथा ॥

इति भविष्यत्पुराणपरिशिष्टवचन—मेरुतुङ्गाचार्यकृतप्रबन्धचिन्तामणिस्थ ११९९ वैक्रमाब्दीयगुर्जराधिपतिकुमारपालरा-

ज्याभिषेक–कुमारपालराज्यसमकालिकमध्वाचार्यसमुद्भववर्णन-पर्यालोचनेन विष्णुस्वामिसमयात् १०४१ विक्रमीयसंवत्सरादूर्ध्वं ११९९ वैक्रमसंवत्सरात्प्रागासीदिति अनुमीयते । भाण्डारकरैस्तु अस्य समयः सन्दिग्धतयैवोपात्तः ।

अस्यैव महापुरुषस्य निम्बार्क–निम्बादित्य इत्यादिनामानि वर्तन्ते । तद्विषये चैवं प्रसिद्धिः–यदेकदा नियमानन्दस्य ग्रामे कश्चिद्दण्डी समागतः । सचाचार्येण भोजनार्थं निमन्त्रितः किन्तु भोज्यवस्तुसम्पादनेनैव सायंकालोऽभूदिति दण्डिना रात्रौ भोजनस्य निषिद्धतयाऽस्वीकारे कृते आचार्यः श्रीमद्भगवन्तं कृष्णमचिन्तयत् । प्रसन्नेन च भगवता कृष्णेन अस्ताचले सुदर्शनात्मकं चक्रं सूर्यात्मना स्थापितमिति स्वाश्रमस्थं महानिम्बवृक्षमारुह्य संन्यासिनं प्रति स्वयमदर्शयदाचार्यो भोजितवांश्च तम् । तदनन्तरं दण्डिना 'रात्रावपि निम्बवृक्षस्थेन भवता सूर्यो दर्शितो भोजितश्चाहमिति भवान निम्बार्काचार्यनाम्ना प्रसिद्धिं गमिष्यति' इत्युक्तम् । तत्प्रभृति अस्य निम्बार्क इति नाम प्रसिद्धिमागमत् इति स्पष्टं भक्तमालायाम् ।

अनेन च श्रीनिम्बार्काचार्येण ब्रह्मसूत्रवृत्तिरूपं वेदान्तपारिजातसौरभं दशश्लोकी, पञ्चविंशतिश्लोकात्मकः सविशेषनिर्विशेषकृष्णस्तवराजः इत्यादयोऽनेके ग्रन्था विराचिताः । तत्रायं कृष्णस्तवराजो निम्बार्कसम्प्रदायस्थयावत्पदार्थप्रकाशक इति सर्वतोऽतिशेते ।

अस्य ग्रन्थस्य व्याख्याभूतौ श्रुत्यन्तसुरद्रुमश्रुतिसिद्धान्तमञ्जरीनामानौ ग्रन्थौ चौखम्बासंस्कृतपुस्तकमालायां प्रकाशितौ वर्तेते। तथापि तद्व्याख्यानभूता तत्संप्रदायसिद्धान्तपथप्रदर्शिका श्रुत्यन्तकल्पवल्लीयं वरीवर्ति तदीयसिद्धान्तयाथार्थ्यज्ञानदानेन। अस्याश्च प्रणेता श्रीमत्पुरुषोत्तमदासः श्रीमन्महामहोपाध्यायकाश्मीरिककेशवभट्टशालकस्य श्रीहरिव्यासदेवाचार्यस्य शिष्यः श्रुत्यन्तसुरद्रुमकर्तृपुरुषोत्तमदासादन्य एवायमिति तर्क्यते। अयमेव पुरुषोत्तमप्रसादः स्वभूदेवाचार्यनाम्ना प्रसिद्ध इति। परं नात्र किञ्चित्प्रमाणमासादितमिति सन्दिग्धमधुना।

सोऽयं श्रुत्यन्तकल्पवल्लीव्याख्यानसहितः श्रीकृष्णस्तवराजनामकोऽयं ग्रन्थः चौखम्बासंस्कृतपुस्तकमाला—काशीसंस्कृतपुस्तकमाला—हरिदाससंस्कृतग्रन्थमालाद्यनेकपुस्तकमालाप्रकाशनकार्यधुरीणैः श्रीजयकृष्णदासगुप्तैर्हरिदासात्मजैः वृन्दावनस्थ पं० श्रीकिशोरदासमहोदयतः समवगम्य चौखम्बासंस्कृतपुस्तकमालायां प्रकाशनार्थं परिष्करणाय प्रार्थितो हरिद्वारस्थऋषिकुले सामयिकप्रधानाध्यक्षकार्याकुलोऽपि यथामति हरिद्वारस्थगुरुमण्डलाभिधसंस्कृतपुस्तकालयस्थपुस्तकानां साहाय्येन परिष्कृत्य प्रेषितो मदीयच्छात्रद्वारा संशोधय्य प्रकाशितोऽयं श्रीजयकृष्णदासगुप्तवरैः।

एतत्परिष्कारायाऽऽदर्शपुस्तकं नातिशुद्धमेवमेवोपलब्धमिति संदिग्धस्थलेषु (?) संशयचिन्हमवस्थापितम्।

अस्मिन् सुकार्ये पं० किशोरदासा धन्यवादार्हा यत्तैः वृन्दावनस्थदानीघाटस्थित -महत्तम पं० श्रीकल्याणदासमहोदय-द्वारा श्रीनिम्बार्काचार्योत्सवकर्तृवरश्रीनिम्बार्कचरणैकनिष्ठश्री-श्रीगोपालदासमहोदयानां पुस्तकालयतस्तदीयशिष्यप्रवरश्री हंसदासजीमहोदयेभ्यः समासाद्यायं ग्रन्थः प्रेषितो मुद्रणा-येति अनेके धन्यवादाश्च तेभ्योऽपि श्रीकल्याणदासमहोदया-दिभ्यो यैरत्र विषये साक्षात्परम्परया साहाय्यमाचरितम् । कृतज्ञताप्रकाशनं च तयोः केलकरदामोदरशास्त्रि-वेहेरेचिन्ताम-णिशास्त्रिणोः याभ्यामत्र ग्रन्थे 'प्रूफ' संशोधनादिकार्यमनुष्ठितं श्रद्धयेति । चिरकृतज्ञोऽहं हरिद्वारस्थगुरुमण्डलधामस्थापक-श्री-स्वामीआत्मस्वरूपमहोदयानाम् ।

विदुषामनुचरो—

गोपालशास्त्री नेने.

श्रीसर्वेश्वरो विजयतेतराम् ।

श्रीहंसभगवन्निम्बार्कमहामुनीन्द्राय नमः ।

सविशेषनिर्विशेषकृष्णस्तवराज—

पञ्चविंशश्लोकीव्याख्या

# श्रुत्यन्तकल्पवली ।

## द्वैताद्वैतदर्शननिरूपिका ।

पश्यन्ति गच्छन्ति गृणन्त्यभीक्ष्णशो
नित्याश्च मुक्ताः सकलागमाश्च यम् ॥
विन्दति वै तत्करुणैकगोचरा-
स्तं श्रीमुकुन्दं शरणं व्रजाम्यहम् ॥ १ ॥
यत्कृपालेशमात्रेण ह्यज्ञः सर्वज्ञतां व्रजेत् ॥
तमहं नियमानन्दं शरणं मनसा श्रये ॥ २ ॥
श्रीव्रजेश हृषीकेश कारुण्यादिगुणार्णव ॥
वल्लवीप्रिय गोविन्द पाहि मां नन्दनन्दन ॥ ३ ॥
यत्पादाम्बुजसंस्मृत्या ज्ञानमुत्पद्यते ध्रुवम् ॥
आश्रये श्रीगुरुं भक्त्या विज्ञानानन्दमूर्तिकम् ॥ ४ ॥
श्रीहरिव्यासदेवार्यकरुणालब्धबुद्धिना ॥
विदुषां कौतुकार्थं वै क्रियते शास्त्रसंग्रहः ॥ ५ ॥
मन्दानामुपकारार्थं तोषार्थं च मनीषिणाम् ॥
श्रीव्रजेशप्रसादार्थं साफल्यं यात्वयं श्रमः ॥ ६ ॥
विरक्तः सर्वकामेभ्यः कृष्णभक्तो दृढः पटुः ॥
गुरुभक्तश्च कर्मज्ञो ह्यधिकार्यत्र भण्यते ॥ ७ ॥
अशेषदोषासंस्पृष्टोऽनन्ताचिन्त्यगुणार्णवः ॥
श्रीमुकुन्दो जगद्योनिर्विषयोऽस्य निरूप्यते ॥ ८ ॥
मुकुन्दभावसंपत्तिः कथ्यतेऽस्य प्रयोजनम् ॥
वाच्यवाचकभावाख्यः सम्बन्धः कविभिर्मतः ॥ ९ ॥
श्रुत्यन्तकल्पवल्ल्या वै जातैः पुष्पफलादिभिः ॥
सिद्धान्ताख्यैः सदा ह्यर्च्यो भगवान् सज्जनैर्मुदा ॥ १० ॥

इह खलु सकललोकहितार्थं संचिन्तयन् भगवान् ग्रन्थकारो मन्दमतीन् शिथिलप्रयत्नान् संवीक्ष्य तांश्चापि सर्ववेदान्तशास्त्रार्थं संग्राहयिष्यन् तदर्थजातं स्तोत्रव्याजेन संगृह्णन् श्रीभगवन्तं वासुदेवं स्तौति । तत्र तावत् तत्स्वरूपमनुभवन्नाह *शान्तीत्यादि* ।

शान्तिकान्तिगुणमन्दिरं हरिं स्थेमसृष्टिलयमोक्षकारणम् ॥
व्यापिनं परमसत्यमंशिनं नौमि नन्दगृहचन्दिनं प्रभुम् ॥ १ ॥

अहं हरिं नौमि तत्स्वरूपगुणादिकथनेन यथाशास्त्रं स्तौमीति यावत् । तत्र तत्स्वरूपं तैत्तिरीयाम्नानाभ्यां लक्षणाभ्यामनुभवन् विशिनष्टि पदचतुष्टयेन । *स्थेमसृष्टिलयमोक्षकारणमिति* । जगदिति सम्बध्यते । जडाजडात्मकस्यानेकभोक्तृभोग्यादिसंभिन्नस्य विचित्राचिन्त्यसंस्थानवतो जगतो जन्मादिकारणम् । तत्र स्थेमशब्दः स्थितिवचनः, सृष्टिः सर्गः, लयः संहरणं, मोक्षो निःशेषकर्मध्वंसपूर्वकपरमानन्दलक्षणभगवद्भावापत्तिरूपः, तेषां निमित्तमुपादानं च, कारणमिति यावत्; "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म संसारबन्धस्थितिमोक्षहेतुः" इति श्रुतेः "जन्माद्यस्य यतः" ( ब्र०सू०१–१–२ ) इति न्यायात् ।

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।" (भ० गी०१०–८)
"यतः सर्वाणि भूतानि प्रभवन्ति युगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥" (वि०स०ना०११–१२

इत्यादिस्मृतेश्च । तत्र स्थितिमात्राभ्युपगमे मन्वादौ, सृष्टिमात्रकथने चतुर्मुखादौ, संहारमात्रग्रहे त्रिनयनादौ, मोक्षमात्रप्रयोगे सनकादौ चातिप्रसङ्गात् तद्वारणाय चतुर्णां ग्रहः । नच जन्मादीनां जगद्वृत्तित्वेन कथं ब्रह्मलक्षणं तदसाधारणधर्माभावादिति वाच्यम्, जन्मादीनां लक्षणत्वानभ्युपगमात् । अपि तु तेषां कारणत्वं तस्य च तदसाधारणधर्मत्वाल्लक्षणत्वासिद्धिः । तच्च निमित्ताभिन्नोपादानत्वं "स्वयमात्मानमकुरुत, सच्च त्यच्चाभवत्" इत्यादिश्रुतेः "प्रकृतिश्च" ब्र०सू०१–४–२३ ) इति न्यायात् । एतस्य च स्वरूपवृत्तिधर्मत्वान्न

ताटस्थ्योपलक्षणत्वादिकलनावकाशः। इत्थं प्रतिज्ञातेषु पदेषु चतुर्ष्वेकं व्याख्यातम्। अथ शिष्टैस्त्रिभिः "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्यर्थभूतं द्वितीयलक्षणमाह-*परमसत्यं नन्दगृहचन्दिन व्यापिनमिति*। तत्र सत्यत्वं नाम प्रागभावध्वंसाभावाप्रतियोगित्वे सति नित्यत्वं कालत्रयाबाध्यत्वमिति। नन्दस्य व्रजाधिपतेर्गृहप्रकाशनाह्लादनशीलत्वं, ज्ञानरूपमिति यावत्। एतेन श्रुतिवृत्तिज्ञानशब्दो व्याख्यातः। अथानन्तपदं व्याचष्टे-*व्यापिनमिति*। चेतनाचेतनविश्वव्यापनशीलं

यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥

इति श्रुत्यन्तरात्, देशकालवस्तुपरिच्छेदशून्यमिति यावत्। देशपरिच्छिन्नत्वं नाम एकत्र वृत्तित्वे सति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं, यथा देवदत्तादि। कालपरिच्छिन्नत्वं च प्राग्ध्वंसाभावैकतरप्रतियोगित्वं, यथा घटादि। अन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छिन्नत्वं, यथा घटः पटो न इत्यादि। एतैस्त्रिभिः परिच्छेदैर्हीनम् अनन्तपदाभिधेयं सर्वसामानाधिकरण्यार्हमित्यर्थः। सत्यमात्रोक्तौ अचेतनस्यापि मूलकारणस्य मायादिपदप्रवाच्यस्य तथात्वात् "अजामेकां, गौरनाद्यन्तवती" इत्यादिश्रुतेः तत्रातिप्रसङ्गात् तद्वारणाय ज्ञानपदसन्निवेशः। तथापि जीवेऽतिप्रसङ्गस्य तादवस्थ्यात् तस्यापि सच्चिद्रूपत्वात् "न जायते म्रियते वा विपश्चित्, विज्ञानं यज्ञं तनुते, विज्ञानघन एवायम्" इत्यादिश्रुतेस्तद्वारणायानन्तपदसन्निवेश इत्यनवद्यम्।

ननु यद्युभयोरपि स्वरूपासाधारणधर्मत्वमेव तर्हि एकेनापि तल्लक्ष्यभूते स्वरूपे सिद्धे द्वितीयलक्षणस्य वैयर्थ्यमेव प्रयोजनशून्यत्वादिति चेत्? न, कारणत्वस्य स्वरूपगतत्वेऽपि तस्य कार्यसापेक्षनिरूप्यत्वात् सत्यादेश्चान्यनिरपेक्षत्वात् तथाभूतविशेषस्य सत्त्वेनोक्तदोषस्यानवकाशात्।

अथैवं लक्षणमुखेन स्वरूपं निरूप्य विशेषान्तरमाह—*अंशिनमिति*। बद्धमुक्तादयश्चेतना अप्राकृतमहदादयोऽचेतनाश्च तदात्मीयत्वेन अंशाः संबन्धिनो विद्यन्तेऽस्येति तथा तं चेतनाचेतनरूपविश्वात्मानम् "एष सर्वभूतान्तरात्मा सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि-

श्रुतेः "अहमात्मा गुडाकेश" (भ० गी०) इत्यादिस्मृतेश्च । यद्वा, मत्स्यकूर्माद्यवतारा अंशा इव अंशा विद्यन्तेऽस्येति तथा तं परिपूर्णं पुरुषोत्तममित्यर्थः । लीलार्थं स्वेच्छया तत्तत्कार्यानुकूलन्यूनाधिकशक्त्याद्याविष्करणेन भेदेऽपि अजहत्स्वरूपगुणशक्तिकत्वान्न स्वरूपशक्त्यादिभिर्भेदकल्पनावकाश इति भावः। तत्र हेतुमाह—*वि(प्र)भुमिति । बृहत्तमं शक्तिगुणाद्याश्रयं सर्वसामर्थ्यवन्तमित्यर्थः । अथ वक्ष्यमाणगुणाननुभवन्निर्दिशति—*शान्तिकान्तिगुणमन्दिरमिति । शान्तिकान्त्योर्गुणविशेषयोर्मन्दिरं निवासम् । तत्र शान्तिर्नाम समत्वं "निर्दोषं हि समं ब्रह्म" इति भगवदुक्तम् । स च स्वरूपवृत्तिगुणानां ज्ञानादीनां वात्सल्यकारुण्यादीनामुपलक्षणार्थः । कान्तिर्नाम कमनीयत्वम् । स च मङ्गलविग्रहाश्रितानां सौन्दर्यमाधुर्यलावण्यमार्दवादीनामुपलक्षणार्थः । उभयेऽपि गुणा लक्षणप्रमाणाभ्यां श्रीपुरुषोत्तमाचार्यचरणैर्विस्तरशो निरूपिता जिज्ञासुभिस्तत्रैव द्रष्टव्याः ।

स्वाश्रितवृत्तिपुण्यापुण्यहारित्वमनुसंदधन्नाह—*हरिमिति* ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥

इत्यादिस्मृतेः । ननु यदुक्तं मायाप्रधानादिपदप्रवाच्यस्याचेतनस्यानाद्यनन्तसत्तायोगः, तदसांप्रतं तस्याज्ञानरूपत्वेन ज्ञानबाध्यत्वान्मिथ्यात्वसिद्धेः। तथा च प्रयोगः–विमतं मिथ्या दृश्यत्वात् जडत्वात् परिच्छिन्नत्वात् शुक्तिरूप्यवदिति । न च तद्विधायकश्रुत्यादिबाध इति शङ्कनीयः (यं), तस्य ज्ञानावधिरूपनित्यत्वप्रतिपादनेन सार्थकत्वात्। नापि क्षेत्रज्ञादिशब्दाभिधेयस्य चेतनवर्गस्य सत्यज्ञानत्वादियोगस्तस्य ब्रह्मप्रतिबिम्बत्वेन ब्रह्माभिन्नत्वात् । ब्रह्मस्वरूपत्वविवक्षया ज्ञानत्वादिश्रुतीनां नैराकाङ्क्ष्यादितिचेत् ? न, अप्रतिपन्नत्वेन तुच्छत्वात्। तथाहि, तत्र यदुक्तम् अचेतनस्याज्ञानरूपत्वं तत्र पृच्छ्यते—अज्ञानमित्यत्र नञा को वाऽर्थो विवक्षितः? षट्सु शक्तोऽयं तावन्नञ्शब्दः,

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥

इति वचनात् ।

न तावत् ज्ञानसादृश्यं वक्तुं शक्यम् । तद्भिन्नत्वे सति तद्गत-

भूयोधर्मवत्वं हि तल्लक्षणम्। अब्राह्मणो ब्राह्मणसदृशः क्षत्रिय इति वक्तस्यात्रासामञ्जस्यात्।

नापि ज्ञानाभावरूपम्, अभावरूपत्वाभ्युपगमात् कारणत्वानुपपत्तेश्च।

नापि ज्ञानान्यत्वं, तस्य अब्राह्मणः शूद्रः इतिवत् भेदस्य सत्त्वापत्तेः।

नापि तदल्पत्वं ज्ञानकोटिसन्निवेशापत्त्या ईषज्ज्ञानमिति पदार्थः स्यात् अनुदरी अल्पोदरीतिवत्॥

नाप्यप्राशस्त्यम्, अपण्डितः अप्रशस्तपण्डित इतीवाप्रशस्तज्ञानमित्यर्थः स्यात्॥

नापि विरोधः, ज्ञानविरोध्यज्ञानं, सुरविरोधी असुर इतिवदर्थः स्यात्, विरोधिनोः सहभावानापत्तेरनङ्गीकाराच्च।

तस्मादचेतनस्याज्ञानत्वानुपपत्तिरेव। अत एव ज्ञानबाध्यत्वमपि नास्ति, सद्रूपस्य बाधासम्भवात्। ननु यदि सत्यमेव तर्हि तद्बाधायोगादेवानिर्मोक्षप्रसङ्गो दुर्वार इति चेत्? न, तन्निवृत्त्यैव मोक्षः सुवचः "भूयश्चान्ते विश्वमायानिवृत्तिः" 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते'।

इतिश्रुतिस्मृतिभ्यां तन्निवृत्तेरेव विधानात्। नाप्युक्तप्रयोगोऽत्र प्रमाणपदवीमारोहति, पक्षसाध्यहेतुदृष्टान्तानां दुर्निरूप्यत्वेन प्रमाणाभासमात्रत्वात्। तथाहि, तत्र तावत्प्रपञ्चरूपोऽयं पक्षः प्रमितो नवेति विवेचनीयम्। नाद्यः, प्रमितस्य निषेद्धुमशक्यत्वात्। ननु प्रपञ्चस्य प्रत्यक्षगोचरत्वेऽपि सत्त्वानधिकरणत्वात् तथात्वं सुशकमिति चेत्? न, तव मते शुद्धस्य निर्धर्मकस्य ब्रह्मणोऽपि सत्त्वानधिकरणत्वेन मिथ्यात्वाविशेषात्। शुद्धं ब्रह्म मिथ्या, सत्त्वानधिकरणत्वात् तव मते प्रपञ्चवदिति प्रयोगात्। नापि द्वितीयः, शशशृङ्गो गन्धवानितिवद्बालभाषितमात्रत्वात्, सिद्धसाधनप्रसङ्गात्। नापि साध्यसिद्धिः। साध्यरूपं मिथ्यात्वं सत्यं वा तुच्छं वा? नाद्यः, मिथ्यात्वस्य सत्यत्वेऽद्वैतसिद्धान्तभङ्गात्। द्वितीये मिथ्यात्वस्य मिथ्यात्वे प्रपञ्चस्य सत्यत्वापत्तेः घटाभावाभावस्य घटरूपवत् जगन्मिथ्यात्वमिथ्यात्वस्य सद्रूपत्वात्। सिद्धसाधनतापत्तेश्च। मिथ्यात्वस्याबाध्यत्वेऽद्वैतहानिः, बाध्यत्वे च जगतः सत्यत्वमित्युभयतोऽपि पाशा रज्जुरित्यर्थः। अतो हेतुसिद्धिरपि दुर्निरूप्या। तथाहि,

दृश्यत्वं न तावद्वृत्तिव्याप्यत्वे, ब्रह्मणि व्यभिचारात् । न च मायाशबलस्य तथात्वाभ्युपगमेनेष्टापन्नत्वात्तस्यापि पक्षान्तःपातित्वेन मिथ्यात्वे क्षत्यभाव इति वाच्यं, शुद्धज्ञानाभावे तादवस्थ्ये तदाच्छादकमूलाज्ञानस्य निवृत्तिर्न स्यात्, शुद्धस्य निष्प्रमाणकत्वेनासिद्धप्रसङ्गाच्च । मूलाज्ञानस्य तादवस्थ्ये चानिर्मोक्षप्रसङ्गात, तत्प्रतिपादकशास्त्रबाधाच्च "ततस्तु तं पश्यति निष्कलं ध्यायमानः परात्परं पुरिशयं पुरुषमीक्षत" इति परविषयकेक्षणश्रुतिविरोधाच्च । किञ्च जिज्ञास्यब्रह्मणो विशिष्टत्वेन शुद्धस्य चाविषयत्वेन जिज्ञासाया अकिञ्चित्करत्वाज्जिज्ञासाशास्त्रारम्भस्य वैयर्थ्यापत्तेः । अज्ञाते धर्मिणि कस्यचिद्धर्मस्य विधातुं निषेद्धुं वाऽशक्यत्वेन शुद्धं दृश्यत्वादिनिषेधार्थं तस्यावश्यं ज्ञेयत्वाच्च ।

नापि फलव्याप्यत्वं दृश्यत्वम् । तत्त्वं नाम वृत्तिप्रतिफलितचैतन्यं तदभिव्यक्तं विषयाधिष्ठानचैतन्यं वा ? उभयथाप्यतीतादावसिद्धेः । तदपि स्वसत्ताकाले फलव्याप्यमिति चेत्; न, नित्यातीन्द्रियेष्वसिद्धेः । तदा योगिनः फलव्याप्यमितिचेत् ? न, "न च योगिप्रत्यक्षगम्यतयाऽपरोक्षत्वं धर्मादीनां चोदनैकप्रमाणवेद्यत्वात्" इति चित्सुखोक्तविरोधात् । तुच्छमपि तुच्छत्वेन प्रत्यक्षमिति सुवचत्वाच्च, पक्षैकदेशसाक्षिवेद्यान्तःकरणतद्धर्मसुखादौ शुक्तिरूप्ये च फलव्याप्यत्वाभावाच्च । ननु कदाचित्कथञ्चिद्विषयत्वं दृश्यत्वम् । एवञ्च अतीतादेरपि कदाचित् स्वाकारवृत्तिफलितचिद्विषयत्वाद्विद्यादेरपि साक्षिविषयत्वाद् दृग्रूपस्यात्मनस्तु तदविषयत्वादितिचेत् ? न, नित्यातीन्द्रियं पूर्वं न ज्ञातमिदानीं शब्देन ज्ञातमितिवत् शुद्धं ब्रह्म पूर्वं न ज्ञातमिदानीं वेदान्तेन ज्ञातमित्यनुभवेन व्यभिचारात् । नापि स्वव्यवहारे स्वातिरेकि[कि ?] संविदपेक्षानियतत्वं दृश्यत्वम् आत्मनोऽपि स्वप्रकाशत्वाद्धितीयत्वादिविशिष्टस्वव्यवहारे तदपेक्षानियमात् । ननु विशिष्टे व्यवहारे विशेषणांशे एव मानापेक्षानियमेऽपि न स्वरूपमात्रव्यवहारेऽपीति चेत् ? न, घटादावपि तथेत्यसिद्धेः । नच घटादौ स्वरूपमात्रव्यवहार एव नास्ति ह्यात्मनि तु सुषुप्तौ तदुपलब्धेरिति वाच्यं, 'सुखमहमस्वाप्सम्' इति प्रत्यभिज्ञया तस्य विशिष्टेनैव सिद्धेः । नन्वात्मनि विशिष्टव्यवहारेऽपि न विशेष्यांशे तदपेक्षा स्वप्रकाशत्वात, घटादौ तदंशेऽपीति चेत् ? न,

नियतपदसन्निवेशवैयर्थ्यात्, आसंसारमज्ञानावृतस्य शुद्धस्य स्वव्यवहारेऽधिगतार्थबोधकवेदान्तजन्याज्ञाननिवर्त्तकवृत्त्यपेक्षानियमाच्च। नाप्यप्रकाशत्वं दृश्यत्वं, घटादौ विशेष्यवत् फलव्याप्यत्वाभावरूपविशेषणस्याप्युक्तन्यायेन सत्त्वेनाऽविद्यादौ शुक्तिरूप्यादौ विशेषण[वत्]विशेष्यस्यापि सत्त्वेन विशिष्टरूपस्वप्रकाशत्वव्यतिरेकरूपहेतोः पक्षैकदेशे दृष्टान्ते चाभावात्। अत्र चित्सुखः-शुक्तिरूप्यादौ विशेषणमस्ति, न तु विशेष्यम्। अध्यस्तत्वात्। अपरोक्षव्यवहारायोग्येऽपि तत्र तद्व्यवहारस्तु अधिष्ठानभूतसाक्षिगताऽपरोक्षाध्यासाद्युक्तं, 'इदम्' इति व्यवहारायोग्येऽपि तस्मिन्नधिष्ठानगतइदन्तारूपादिदमिति व्यवहारवदिति।

इति दृश्यत्वहेतुनिरासः।

---

नापि जड़त्वस्य हेतुत्वयोगः आभासत्वसाम्यात्।

किं(१)वा तावज्जडत्वमिति विवेचनीयम्। न तावदज्ञातृत्वं तत्त्वं, तव मते पक्षान्तःपातिनोऽहमर्थस्यैव ज्ञातृत्वादंशतोऽसिद्धेः, शुद्धात्मनोऽप्यज्ञातृत्वाद्व्यभिचारश्च। शुद्धं ब्रह्म मिथ्या अज्ञातृत्वात् प्रपञ्चवदित्याभाससाम्यात्। ननु शुद्धेऽपि कल्पितज्ञातृत्वमस्तीति चेत्? न, कल्पितत्वेन हेत्वभावेन व्यभिचारानुद्धारात्, शुद्धत्वभङ्गात् शुद्धविभागासिद्धेश्च कल्पितज्ञातृत्वस्याभावो हेतुरितिचेत्? न, तादृशज्ञातृत्ववति अन्तःकरणे तदभावासिद्धेः, शुद्धे तादृशज्ञातृत्वाभावाच्च।

नाप्यज्ञानत्वं तत्त्वं, वृत्तिज्ञाने भागासिद्धेः, आत्मनि व्यभिचारश्च। तथाहि आत्मस्वरूपज्ञानं सविषयं नवेति? आद्येऽपि स्वविषयकं वा? नाद्यः, स्ववृत्तिविरोधेन परैरनभ्युपगमात्। ननु स्वकर्मकत्वाभावेऽपि स्वव्यहारजननयोग्यत्वं स्वविषयत्वमस्ति, तत्स्वभावस्य स्फुरणस्य तद्व्यवहारजनकतया तद्विषयत्वमिति चित्सुखोक्तेरितिचेत्? न, घटादावपि एतदन्यस्य ज्ञप्तिकर्मत्वस्याभावात्। नहि घटादावपि तदाकारवृत्तिस्तत्प्रतिबिम्बितचैतन्यं वा ज्ञप्तिः, तां च प्रति कर्मत्वं तत्कारकविशेष्यत्वं वा तज्जन्याव(त)रणाभिभवरूपातिशययोगित्वं वेति युक्तं, ज्ञानैकसति दुःखादौ शुक्तिरूप्यादौ

---

(१) वाशब्दो वाक्यालङ्कारे बोध्यः।

वोक्तरूपज्ञप्तिकर्मत्वाभावापातात्, ब्रह्मणोऽपि चरमवृत्तिविषयस्योक्तरूपां ज्ञप्तिं प्रत्युक्तरूपकर्मत्वापाताच्च । किन्तु वृत्त्यभिव्यक्तं घटाधिष्ठानचैतन्यं ज्ञप्तिः । नच तस्य घटादावपि व्यवहारादन्यत्कृत्यमस्ति । इयांस्तु विशेषः केवलं घटादिस्वान्यज्ञप्तिकर्म, चैतन्यं स्वस्वरूपकर्मेति ।

द्वितीये परविषयकत्वे चासम्भवः, मोक्षे परस्याभावाभ्युपगमात् । त्वन्मते वर्तमानस्यैव विषयत्वात् 'वह्निरासीत्' इत्याद्यनुमिताविव साक्षिज्ञाने मोक्षसुषुप्त्योरतीतविषयोल्लेखरूपोप्लवापाताच्च ।

नापि निर्विषयत्वं, ज्ञानत्वहानात् । यज्ज्ञानं तत्सविषयमेव, सप्रतियोगिकेऽभावादौ सविषयकेच्छादौ घ(१)टादिज्ञाने च सविषयत्वादेः स्वभावदर्शनात् । नच कदाचित्सविषयमात्रेण ज्ञानत्वं, मोक्षे आनन्दप्रकाशाभावापाताच्च, अर्थप्रकाशत्वरूपज्ञानस्वभावाभावे घटादेरपि ज्ञानत्वापाताच्च, ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादिति विवरणोक्तिभङ्गाच्च । किञ्चात्मस्वरूपज्ञानं प्रमा भ्रमो वा ? नाद्यः, तद्वेद्यस्याविद्यादेः तात्त्विकत्वापातात्, प्रमाणाजन्यत्वाच्च । नान्त्यः, दोषाजन्यत्वात् । स्वभावतो द्वयहीनश्चेत् ? स्वभावतो ज्ञानमपि न स्यात् ।

नाप्यनात्मत्वं जडत्वम् । तथाहि अनात्मत्वं न तावज्जातिः, तस्यैकत्वात् । विशिष्टानां भेदेपि पक्षान्तःपातित्वात् प्रतियोग्यसिद्ध्या तदभावासिद्धेः । इति जडत्वहेतुनिरासः ।

नापि परिच्छिन्नत्वमत्र हेतुः, आभासत्वाविशेषात् । तथाहि, परिच्छिन्नत्वं त्रिविधम्–देशकालवस्तुभेदात् । नाद्यद्वितीयौ, देशकालज्ञानेषु त्वदभिप्रेतवियदादे रूप्यादेश्च प्रतिपन्नोपाधिनिषेधे चासिद्धेः आकाशरूपदेशस्य कालस्य परिच्छिन्नत्वेनैव धर्मिग्राहिणा साक्षिणा, "आकाशवत्सर्वगतश्च नित्यः" "सदेव सौम्येदमग्र आसीत्" "इहैव तं मुच्यते" "अथ मर्त्योऽमृतो भवति" "यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादि श्रुत्या 'सदा सर्वकार्यदर्शनात्' इत्यादियुक्त्या च–सिद्धेः । 'ब्रह्म सर्वत्र सर्वदा' इति प्रतीतिबाधाच्च, देशः सर्वत्रास्ति, कालः सर्वदा पूर्वकालः इत्यबाधितप्रतीत्या तयोः स्वनिर्वाहकतया प्रमेयत्वादिस्वसम्बन्धसम्भवाच्च । अज्ञानस्य च

(१) 'घटाविज्ञाने' इत्यादर्शे ।

सर्वदेशकालोपादानत्वेन सर्वगतं ब्रह्म प्रति विषयसम्बन्धावधारणत्वेन च देशादिपरिच्छेदायोगात् प्रतिपन्नोपाधौ निषेधस्य च कुत्रचित्कदाचिदभावेन तत्र तदा प्रतियोगिनः सत्त्वापाताच्च। ननु "एतस्मादात्मन आकाशः सम्भूतः" इति श्रुत्या आकाशस्य प्रागभावप्रतियोगित्वे सिद्धे तेनैव ध्वंसाभावप्रतियोगित्वस्याप्यनुमातुं शक्यत्वान्न तदंशेनोक्तदोष उद्भावितुं शक्य इतिचेत्? न, भूताकाशस्य जन्यत्वयोगेऽपि अव्याकृताकाशस्य तदसम्भवादुक्तदोषस्य तादवस्थ्यं बोध्यम्। किञ्चानृतादौ ब्रह्मात्यन्ताभावान्योन्याभावयोः सत्त्वात्तत्र व्यभिचारः, ब्रह्म मिथ्या अनृताद्यन्योन्याभावप्रतियोगित्वात् घटाद्यन्योन्याभावप्रतियोगिघटादिवदित्यादिप्रयोगात्। ननु अनृतादौ ब्रह्मात्यन्ताभावान्योन्याभावयोर्मिथ्यात्वात् तत्र ब्रह्मसंसर्गस्य चाभिन्नत्वान्नोक्तदोषावकाश इति चेत्, न, तथात्वेऽपि मिथ्यात्वाभिन्नत्वसंसर्गयोस्तात्त्विकत्वापत्त्या तद्भिया पारमार्थिकस्यैवाभावस्याकामतोऽप्यङ्गीकार्यत्वात्। संदिग्धानैकान्त्यस्य दुर्वारत्वात्। अप्रयोजकत्वाच्च।

नापि च(१)रमः, ब्रह्माभिन्नत्वस्य तात्त्विकस्य प्रपञ्चेऽप्यभावात्। आत्मन्यपि अनृतव्यावृत्तिस्तात्त्विकी, तथा तस्य तथानुमातुं शक्यत्वात्। कल्पितस्य तु आत्मन्यपि भावात् भिन्नत्वमात्रस्य चाध्यस्ताद्भेदेन सत्त्वेऽप्युपपत्तेः, सत्याद्भेदाभावस्य चासिद्धेः। एतेन विभक्तत्वमपि निरस्तम्। 'घटः सन्' 'पटः सन्' इति घटादिकमनुगतसद्रूपे विभज्यत इति निरस्तम्। 'नीलो घटः' 'घटश्चलति' 'पटश्चलति' 'असन्नृशृङ्गम्' 'असत् खपुष्पम्' इत्यादिषु नीलादिषु घटादीनाम्। असति नृशृङ्गादीनामध्यासापत्तेः। 'अयं सर्पोऽयं सर्पः' इति रज्जुमालादिष्वननुगतेषु सर्पस्यारोपवदननुगतेषु घटादिषु अनुगतसद्रूपस्यारोपापत्तेश्च; 'खण्डो गौः' 'मुण्डो गौः' इत्यादावनुगतगोत्वादौ व्यक्तेरारोपापत्तेश्च। न च सद्रूपब्रह्माभिन्नं गोत्वादिकं नोपपद्यते इति वाच्यम्, अगवादिव्यावृत्तस्य सकलगवादिव्यवहारस्यानुपपत्तेः, सद्रूपस्य सर्वानुगतत्वेन व्यावृत्तेरसम्भवात्। न च तत्तद्व्यक्तिविशिष्टं सत्सामान्यमेव तत्तद्व्यवहारजनकमिति वाच्यं, तत्तद्व्य-

---

(१) वस्तुतः परिच्छिन्नत्वमिति तृतीयः पक्ष इत्यर्थः।

क्तिविशिष्टस्य मिथ्याभूतस्य व्यक्त्यनधिष्ठानत्वेन तत्र व्यक्तेरनध्यासात, सत्सामान्यव्यक्त्योराध्यासिकातिरिक्तसम्बन्धस्य त्वयाऽनङ्गीकारात्। एतेन घटादिकं सद्रूपे कल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवदिति निरस्तम्, रूपादिहीनस्य ब्रह्मणश्चाक्षुषत्वायोगात्। न च प्रतिनियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षा, ब्रह्म तु सर्वेन्द्रियाग्राह्यमिति न तद्ग्रहे रूपाद्यपेक्षा, चक्षुरादिगृहीतस्य दृश्यस्य मिथ्यात्वेन घटाद्यनधिष्ठानत्वात्। एतेन द्रव्यग्रहे रूपाद्यपेक्षा ब्रह्म तु न द्रव्यमस्थूलमनण्विति परिमाणादिनिषेधादिति निरस्तम्, एतच्छ्रुतेः प्राकृतपरिमाणनिषेधपूर्वकसर्ववैलक्षण्यरूपापरिच्छिन्नपरिमाणपरत्वात् "अणोरणीयान्महतो महीयान्" इति श्रुत्यन्तरैक्यार्थाच्च। एतेनाध्यस्तद्रव्यवति गुणादौ रूपानपेक्षया चाक्षुषत्वदर्शनेन धर्मान्न्यूनसत्ताकद्रव्यत्ववद्ग्रहे चक्षुषो रूपापेक्षा ब्रह्मणि च द्रव्यत्वं धर्मापेक्षया न्यूनसत्ताकमिति न तद्ग्रहे चक्षुषो रूपापेक्षेति निरस्तं स्याच्चायं नियमो यद्याकाशपरिमाणशब्दादीनां द्रव्यत्वेन कदाचिच्चाक्षुषत्वं, चक्षुर्योग्यानां गुणानां द्रव्यत्वेन चक्षुषा ग्रहणे स्वाश्रयसमवेतत्वादिसम्बन्धेन रूपस्य हेतुत्वमस्त्येव। *इति परिच्छिन्नत्वहेतुनिरासः*।

अस्य दृष्टान्तस्यापि वैकल्यमेव शुक्त्यादेः पक्षान्तःपातित्वेन तत्प्रयोगस्याभासमात्रत्वात्। न च व्यतिरेकस्य ब्रह्मणः सत्त्वाप्नोक्तदोषस्पर्शावकाश इति वाच्यं, विकल्पासहत्वात्। शुद्धं ब्रह्माऽत्र दृष्टान्तीक्रियते विशिष्टं वेति चिन्तनीयम्। नाद्यः, सर्वप्रमाणविषयस्य शशशृङ्गकल्पत्वेन दृष्टान्तीभावानर्हत्वात्, प्रमाणविषयत्वहानेः अद्वैतभङ्गाच्च। नापि द्वितीयः, तस्य पक्षान्तःपातित्वाविशेषादित्यलं कुतर्कनिरासैः। तस्मात्परिणामादिवत्परतन्त्रसत्ताकोऽनाद्यनन्तो जडवर्गः। तथा च श्रुतिः "यदासीत्तदधीनमासीत्" इत्यादिः,

गौरनाद्यन्तवती जनित्री भूतभाविनी।
सिताऽसिता च रक्ता च सर्वकामदुघा प्रभोः॥
अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः।
"मायां तु प्रकृतिं विद्यात्" इत्यादिः।
त्रिगुणं तज्जगद्योनिरनादिप्रभवाव्ययम्॥

अचेतना परार्था च नित्या सततविक्रिया ।
तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ॥
आविर्भावतिरोभावजन्मनाशविकल्पवत् ।
इत्यादिस्मृतिश्च "नाभाव उपलब्धेः" इत्यादिन्यायाच्च ॥

यच्चोक्तं क्षेत्रज्ञादिशब्दाभिधेयश्चेतनपदार्थो ब्रह्मप्रतिबिम्बत्वान्न वस्त्वन्तरं सूर्य्यादिप्रतिबिम्बवत्, उपाध्यपगमे तदनुपलब्धेरित्यादि, तत्तुच्छं, स्वप्राङ्गणेऽश्वधावनमात्रत्वात् अनुपपन्नमेव । तथाहि प्रतिबिम्बभावे तावदुपाधिरूपस्य जलादेर्बिम्बस्य च सूर्यादेः सावयवत्वरूपवत्त्वादिदर्शनात्तदेव निमित्तमवगम्यते । प्रकृते चाविद्यान्तःकरणादीनां बिम्बस्य च चिन्मात्रस्य तन्निमित्तविहीनत्वात् प्रत्युत निरवयवत्वनीरूपत्वादियोगान्न प्रतिबिम्बवादस्य प्रामाण्यम् । न च नीरूपनिरवयवस्यापि रूपस्य गगनादेश्च तथात्वदर्शनान्नोक्तदोषो युज्यत इति वाच्यम्, सावयवद्रव्याश्रितस्यैव रूपस्य नक्षत्रादिप्रभायुक्तस्यैवाकाशस्य तथात्वदर्शनाद् दोषस्य तादवस्थ्यमेव । अन्यथा शब्दादीनां रूपादौ रूपादीनां च शब्दादौ कालादौ तेषां च रूपादौ प्रतिबिम्बभावापत्तेः निरवयवत्वादिसाम्यात् । आकाशस्य तु पञ्चीकृतद्रव्यत्वाद् रूपवत्त्वसावयवत्वादियोगितया प्रतिबिम्बभावो युक्त एव । निरवयवाव्याकृताकाशस्य तु चाक्षुषत्वाभावेन उपमानीकर्त्तुमशक्यत्वात् । अलं विस्तरेण ।

यच्चोच्यते ब्रह्मैव स्वाविद्याध्यासवशादविद्यावच्छिन्नं वाऽन्तःकरणावच्छिन्नं वा प्रत्यगात्मपुरुषक्षेत्रज्ञादिशब्दाभिधेयं घटाद्यवच्छिन्नाकाशवत् तथाच, कल्पितस्याविद्यारूपोपाधेर्ब्रह्मैक्यज्ञानाद्बाधितत्वे सति शुद्धस्यावशिष्यमाणत्वादद्वैतसिद्धिः, तदपि तुच्छतरम् । अनुपपत्तिसाम्यात् । तथाहि, उपाधिस्तावत् अविद्यारूपोऽन्तःकरणरूपो वा शुद्धं नित्यमुक्तं निर्विशेषं चेतनं ब्रह्मानेकधा कुठारः काष्ठानीव च्छिनत्ति यथावस्थितं वा तदेकदेशमवच्छिनत्तीति वक्तव्यम् । नाद्यः, सर्वगतस्य निरवयवस्य ज्ञानमात्रस्य विच्छेदनक्रियाकर्मत्वापत्त्यनर्हत्वात्, स्वभावत्यागप्रसङ्गाच्च । इतरथा, ब्रह्मणो निरवयवत्वविभुत्वादीनां क्षेत्रज्ञवर्गस्याजत्वादीनां च भङ्गात् तद्विषयकश्रुतिव्याकोपाच्च । नापि द्वितीयः, तत्पक्षे उपाधेः परिच्छिन्नत्वं विभुत्वं वा आन्त्ये उत्क्रान्तिगत्या-

द्यनुपपत्तेः ब्रह्मविभुत्ववदुपाधेरपि तथात्वेन सर्वस्याप्यावृतत्वान्मुक्तोपसृप्योच्छेदापत्तेः सर्वप्रकाशावरणाज्जगदान्ध्यापत्तेश्च । उपाधिपरिच्छिन्नपक्षेऽपि उत्क्रान्त्यादिव्यवस्थोपपत्तावपि दोषान्तरभावात् । तथाचोपाधेः परिच्छिन्नत्वेन चलनावस्थायां सर्वगतस्य ब्रह्मणोऽव्याकृताकाशवन्निश्चलतया घटाकाशस्य घटचलने चलनाभाववच्चलनानुपपत्तेः । पूर्वदेशस्थचेतनक्षेत्रज्ञाख्यस्याकस्मिको मोक्षस्तदुत्तरदेशस्थस्य चेतनस्य नित्यमुक्तशुद्धबुद्धरूपस्य कस्मान्निर्हेतुको बन्धश्च पदे स्यातां कृतनाशाकृताभ्यागमप्रसङ्गश्चेति प्रतिबिम्बवादवदस्याप्यसामञ्जस्यमेवेत्यलं विस्तरेण । तत्सिद्धमुक्तलक्षणमेव ब्रह्मेति ॥ १ ॥

ननु "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । केवलो निर्गुणश्च" इति श्रुतेरद्वितीयत्वनिर्विशेषत्वादिविधानात्कथमुक्तलक्षणं तदित्याशङ्क्योक्तश्रुत्यर्थं सगुणनिर्गुणविवेकेन निरूपयन् स्तौति—*निर्गुणं तदिति* ।

निर्गुणं तदिति वैदिकं वचोऽविद्यया त्वयि विशेषणासहे ॥
वस्तुतोऽखिलविशेषसागरे नो विरुद्धमिति तावदस्तु मे ॥ २ ॥

"तद्ब्रह्म निर्गुणम्" इति यद्वैदिकं वचः "केवलो निर्गुणश्च" इति वाक्यजातं त्वयिनो विरुद्धमिति योजना विरोधावहा न भवतीत्यर्थः । तत्र हेतुमाह—*अविद्यया,—विशेषणासहे इति* । भवतः श्रीपुरुषोत्तमस्य विद्याकरणकविशेषणासहत्वात् । प्रकाशौष्ण्याद्याश्रयस्याग्नेः शैत्यान्धकाराद्यसहिष्णुत्ववत् । आविद्यकविशेषाश्च कर्मक्लेशादयः । तत्र कर्म तावद् द्विविधं, पुण्यापुण्यभेदात् । तत्र पुण्यं वेदविहितं तच्च नित्यनैमित्तिकादिभेदेनानेकविधम् । "यावज्जीवमग्निहोत्रं जुहोति" "अहरहः सन्ध्यामुपासीत" इत्यादिश्रुतिभ्यः, शास्त्रनिषिद्धं हिंसादिकं द्वितीयम् । "न हिंस्यात्सर्वा भूतानि" इत्यादिश्रुतेः । पुनरपि प्रकारान्तरेण त्रिविधं सञ्चितक्रियमाणारब्धभेदात् । तत्र पूर्वजन्मार्जितं सञ्चितपदाभिधेयम् । जन्मान्तरबीजभूतं पूर्वसञ्चितं भविष्यद्भोगार्थकखातादिवृत्तिधान्यादिवत् वर्त्तमानदेहेन नित्यशः क्रियते करिष्यते चेति क्रियमाणम् । जन्मान्तरकारणं क्षेत्रादिवृत्तिधान्यादिव-

द्वर्तमानेन शरीरेण भुज्यमानं प्रारब्धरूपमिति पाकाद्यर्थं महानसादिनीततंडुलादिवदिति विवेकः । क्लेशोऽपि पञ्चविधः "अविद्यास्मितारागद्वेषाभिनिवेशात्" ( पा. यो. २पा. ३सू, ) इति पातञ्जलसूत्रात् ।

तत्रातद्वति चैतन्याद्यभाववति देहादौ तत्प्रकारकं ज्ञानं विपर्ययरूपम् अविद्याशब्दाभिधेयं "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" (पा० यो० २पा० ५सू०) इति सूत्रात् । तत्र ध्रुवं स्वर्गादिसुखमिति अनित्ये नित्यत्वबुद्धिः अशुचौ बीभत्से त्वङ्मांसमलमूत्रागारे स्त्रीदेहे शुचित्वसौन्दर्य्यादिबुद्धिः । यथा रोगिणोऽपथ्यादिभोगे तद्रसास्वादजन्यसुखबुद्धिः । अनात्मनि शरीरे मनुष्योऽहं ब्राह्मणोऽहं देवदत्तनामाहमित्यादिबुद्धिः ।

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ (भ०गी०१८अ०३२श्लो.)

इति भगवदुक्तेश्च । सैव सर्वक्लेशमूलकारणम् ,

अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितं मन्यमानाः ॥

इत्यादिश्रुतेः ।

बुद्धिपुरुषयोरभेदाभिमानोऽस्मिता "दृ(१)ग्दृश्ययोरेकात्मतैवास्मिता" (पा. यो. २पा. ६सू.) इति सूत्रात् ।

साधनत्वेपि सर्वसुखविषयकाभिलाषाविशेषः सुखानुभवजन्यसंस्काररूपो रागः "सुखानुशयी रागः" ( पा. यो. २पा. ७सू. ) इति सूत्रात् ।

दुःखहेतुषु सत्स्वपि दुःखाप्राप्त्यभिलाषाविशेषो दुःखानुभवजन्यसंस्कारविशेषो द्वेषः इत्थं दुःखं मम मा भूयादित्याकारकः, "दुःखानुशयी द्वेषः" (पा. यो. २पा. ८सू.) इति सूत्रात् ।

आयुःक्षयेऽपि एतैर्देहादिभिर्मे वियोगो माभूदित्यभिलाषाविशेषोऽभिनिवेशः। "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" (पा. यो. २पा. ९सू.) इति सूत्रात् ।

ते एव तमोमोहतामिस्रान्धतामिस्रसंज्ञाभिः श्रीपराशरेण कथ्यन्ते-

तमोऽविवेको, मोहः स्यादन्तः करणविभ्रमः ।
महामोहस्तु विज्ञेयो ग्राम्यभोगसुखेषणा ॥

---

( १ ) 'दृग्दर्शनशक्त्योरेका' इति पाठो योगसूत्रे ।

मरणं ह्यन्धतामिस्रं तामिस्रं क्रोध उच्यते।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥ इति।

विकाराश्च जन्मास्तित्ववृद्धिपरिणामापक्षयनाशरूपाः षड्विधाः। गुणाः सत्वरजस्तमोरूपास्त्रिविधाः। कर्मफलानि चानेकविधानि सुखदुःखात्मकानि। एतान्याविद्यकविशेषणानि प्रकृतिसम्बद्धप्रत्यगात्मधर्माः तव तु तदसहिष्णुस्वभावत्वात् तथाभूतप्राकृतविशेषणं पुरस्कृत्य निर्गुणशास्त्रस्य समन्वयस्त्वयि ह्यस्पृष्टमायातत्कार्यगुणादिदोषगन्धमाहात्म्ये भगवति परब्रह्मणि न दोषावह इत्यर्थः। "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" इत्यादिश्रुतेः।

परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे।
कर्मक्लेशविपाकाद्यैरस्पृष्टस्याखिलेशितुः॥

इत्यादिस्मृतेश्च। ननु "केवलो निर्गुणश्च' इतिश्रुतौ सामान्यगुणनिषेधदर्शनात्कथं विशेषार्थे तस्याः संकोचप्रमाणाभावादितिचेत् ? न, श्रुत्यन्तरविरोधात्। यथा "पशुना यजेत"इत्यत्र सामान्यपशुप्रयोगेऽपि छागेन यजेदित्यनेनैक्यार्थाय तन्मात्रे संकोचः सामान्यपशुयजनस्यासम्भवात्। ननु विधिवाक्यस्य निषेधेन दृष्टान्तोऽसमीचीनो भावाभावयोर्दृष्टान्तदार्ष्टान्तभावायोगात् अन्यथातिप्रसङ्गो दुर्वार इतिचेत् ? न, अभावदृष्टान्तस्यापि सत्त्वात्। तद्यथा, न "हिंस्यात्सर्वा भूतानि" इति भूतमात्रहिंसानिषेधपरत्वेऽपि "अग्निषोमीयं पशुमालभेत"इत्यस्य प्रबलवाक्यबाधानिवृत्तये तद्भिन्नहिंसानिषेधे संकुच्यते तथा प्रकृतेऽपि सामान्यगुणनिषेधे प्राप्तेऽपि विशेषप्रबलवाक्यबाधानिवृत्तये तद्भिन्नविषये संकोच इति सिद्धान्तः। कानि प्रबलवाक्यानि किंवा तेषां प्राबल्ये प्रमाणमित्याशङ्कायां तानि व्याख्यास्यन् विशिनष्टि—*वस्तुतोऽखिलविशेषसागरे इति*। स्वभावेनैवाऽखिलविशेषाणामनन्ताचिन्त्यापरिमितासंख्यातगुणशक्त्यैश्वर्यादीनां सागरे। "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामः सत्यसंकल्पः" "विष्णोर्नु कं वीर्याणि प्रावोचद्यः पार्थिवानि विममे रजांसि" "न ते विष्णोजायमानो न जातो देवस्य महिम्नः परमन्तमाप" "सहस्रधा महिमानः सहस्रः" इतिश्रुतयः।

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोधस्ववीर्यशक्त्यादिगुणैकराशिः ।
सर्वेश्वरः सर्वगः सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
ऐश्वर्यस्य समग्रस्य (१)धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीगना ॥

इतिस्मृतयः । "विवक्षितगुणोपपत्तेश्च" "सर्वोपेता च सर्वधर्मोपपत्तेश्च"इत्यादिन्यायाश्च । अन्यथा एतेषां वाक्यानां बाधात् तत्प्राबल्यं स्वाभाविकत्वमेव लिङ्गं मानम् । यथाऽग्नौ जलादौ च द्विविधानि धर्माणि औपाधिकानि स्वाभाविकानि च । तत्रौपाधिकानि धूमादीनि, फेनशैवलादीनि, औष्ण्यप्रकाशादीनि शैत्यद्रवत्वादीनि च स्वाभाविकानि निर्धूमोऽग्निः निःफेना आप इत्यादिषु निर्गुणा वह्न्यादय इति सामान्यनिषेधस्य संकोचो युक्तो न तु औष्ण्यशैत्यादीनामपि निषेधे तस्य परिसरितुं शक्तिः स्वाभाविकनिषेधे बाधापत्तेः । नहि चतुर्मुखेनापि स्वाभाविकगुणा निषेद्धुं शक्याः स्वाभाविकत्वादेव, एवं प्रस्तुतेऽपि ब्रह्मणि प्राकृतेष्वेव गुणेषु निषेधसामान्यस्यापि प्रवृत्तिर्न स्वाभाविकेषु धर्मेषु, अनाप्तत्वापत्तेः । अन्यथा स्वरूपस्यापि निषेधः सुवचः स्वाभाविकत्वाविशेषात् । एतेन "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं" "नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादयः श्रुतयोऽपि व्याख्याताः, तुल्ययोगक्षेमत्वात् । अदृश्यत्वादिगुणकृतलौकिकदृश्यत्वादिविलक्षणत्वं विधाय ह्यनन्तरं "यः सर्ववित्, यस्य ज्ञानमयं तपः, तस्मादेतन्नाम रूपं च जायते"इत्यादिना प्रसिद्धसार्वज्ञ्यादिविधानात्, "अदृश्यत्वादिगुणको धर्मोक्तेः" इतिन्यायाच्च ।

स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम् ॥

इति श्रीभगवदाचार्योक्तेश्च । यस्मादेवं स्वभावत एवास्पृष्टमायातत्कार्यकर्मविपाके क्लेशविकारादिगन्धमाहात्म्येन स्वभावत एवानन्ताचिन्त्यासंख्यातस्वाभाविकयावदात्मवृत्तिकल्याणगुणगणश-

(१) 'समर्धमस्य' इत्यादर्शे ।

क्तिविभूतिमत्त्वेन च वेदान्तप्रतिपाद्यो भगवान् श्रीवासुदेवः पुरुषोत्तमस्त्वमसि तस्मादेव उभयप्रकारकविधिनिषेधवेदान्तवाक्यानि त्वय्यविरुद्धानि । तदेव स्वसंमतमाह-*इति तावदस्तु मे* । तस्मात्तावदेवाविरुद्धसिद्धान्तो मे ममापि औपनिषदैकनिष्ठत्वदीयस्य अस्तु । (१)ममाप्येतावदेव परस्परया प्राप्तनिर्णय इति संक्षेपः । एतेन "तत्तु समन्वयात्" इति व्याख्यातं ज्ञेयम । तत्र ज्ञानादयः सौशीलवात्सल्यकारुण्यमार्दवार्जवादयः शक्तिश्चाघटघटनापटीयस्त्वसामर्थ्यविशेषः । विभूतिश्च द्विधा नित्यविभूतिः लीलाविभूतिश्च । एतस्य विस्तारो लक्षणप्रमाणाभ्यां श्रीपुरुषोत्तमाचार्यचरणैर्वेदान्तरत्नमञ्जूषायां कृतस्तत्रैव द्रष्टव्य इति संक्षेपः ॥ २ ॥

एतावता श्लोकद्वयेन श्रीभगवतो जगत्कारणत्वं कर्मक्लेशादिप्राकृतहेयगन्धास्पृष्टमहिमत्वं ह्यनन्ताचिन्त्यासंख्यातस्वाभाविकसद्गुणाकरत्वं प्रतिपादितं शास्त्रमुखेन इदानीं साम्यातिशयशून्यत्वेन निरतिशयमहत्त्वं प्रकाशयन् सर्वशरण्यत्वेन स्तुवन्नाह—

त्वत्समो यदिह नास्ति चेतनः कस्त्वदाधिकगुणाकरः प्रभुः ॥
त्वां प्रयामि शरणं शरण्यकं पुण्डरीकनयनं सुधानिधिम् ॥३॥

*त्वत्सम इति । इह लोके वेदे च यद्यतः त्वत्समः सजातीयः चेतनो नास्ति तर्हि त्वदधिकगुणाकरः को भवतीति योजना । तत्र हेतुः-*प्रभुरिति । प्रभुत्वात् सर्वचेतनाचेतनरूपजगन्नियन्तृत्वादित्यर्थः । एतेन "एकमेवाद्वितीयं" नेह नानास्तिकिंचन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादयः श्रुतयो व्याख्यायन्ते । तथाहि, तत्र एकशब्दः स्वतन्त्रसत्ताश्रयस्य परब्रह्मणः श्रीपुरुषोत्तमस्याभिधायकः स्वतन्त्रसत्ताश्रयः सत्पदार्थ एक एवेति । एवकारश्च "सदेव सौम्येदमग्र आसीत्" इत्युपक्रमात् अयोगव्यवच्छेदार्थकः स्वतंत्रसत्ताको नेति न अपि तु तथैव, पार्थ एव धनुर्धर इतिवद्विशेष्यासंगसत्वात् । अद्वितीयशब्दः सजातीयव्यवच्छेदपरः "अस्य गोद्वितीयोऽन्वेष्टव्यः" इत्युक्ते गौरेव द्वितीयोऽन्वेष्यते नाश्वो न गर्दभः" इतिमहाभाष्योक्तानुसारात् । समानद्वितीयपरं द्वितीयस्वतन्त्रसत्ताकशून्यमित्यर्थः । स च त्वत्समो यदि चेतनोऽन्यो नास्तीति पदेना-

(१) 'समाप्येतवदेव' आदर्शे ।

द्वितीयपदं व्याख्यातम् । अथैकपदं व्याचष्टे-*कस्त्वदाधिकगुणाकर* इति । त्वत्तोऽधिक एव त्वदाधिकः गुणानां पूर्वोक्तानामाकरः । त्वदाधिकश्चासौ गुणाकरश्चेति तथाभूतो न कोऽपीति यावत् । तस्मादेको मुख्यः स्वतन्त्रे सद्वस्तुत्वमेवेत्यर्थः । तत्र हेतुमाह-*प्रभुरिति* । प्रभवत्यस्मादिति सर्वकारणं सर्वात्मा नियन्ताचेति यावत् । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति मन्त्रवर्णात् । एतेन स्वगतधर्माणां गुणशक्तिविग्रहाणामपि स्वतन्त्रसत्ताभावो द्योत्यते । तेषामपि आत्मीयत्वेनात्मनः पृथक् स्वतन्त्रसत्ताभावत्वाविशेषात् । यद्वा, एकशब्दश्चेतनानामद्वितीयश्चाचेतनस्य एवकारश्च स्वगतधर्माणां स्वतन्त्रसत्तानिषेधपरः । तथाच, त्रयाणामपि चेतनाचेतनस्वगतधर्माणामात्मीयत्वाविशेषेण तदपृथक्सिद्धत्वात् "यदासीत्तदधीनमासीत्" इति श्रुतेः । एवं प्रभुशब्दः सच्छब्दपर्यायः स्वतन्त्रसत्ताश्रयस्त्वमेव विश्वात्मत्वतत्कारणत्वनियन्तृत्वादिभ्यः समः स्वतन्त्रसत्त्ववच्चेतनो यदि नास्ति तर्हि अधिकस्य का सम्भावना, न क्वापीत्यर्थः । चेतनशब्दोऽचेतनादेरप्युपलक्षणार्थः ।

नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ।
( भ० गी० ११ अ० ४३ श्लो० )

इत्यर्जुनोक्तेरिति राद्धान्तः । सर्वथापि स्वतन्त्रसत्तावाँस्त्वमेवेति वाक्यार्थः । एके चेदं वाक्यं सजातीयविजातीयस्वगतभेदनिषेधपरमित्याहुः । तत्र सजातीयश्चेतनवर्गो विजातीयोऽचेतनवर्गः । स्वगताश्च गुणाः शक्त्यादयस्तेषां ब्रह्मणो भेदो नास्त्येवेति । तच्चिन्त्यम्, विशेषणासङ्गतैवकारेणान्ययोगव्यवच्छेदार्थकत्वायोगात् शङ्खः पाण्डुर एवेतिवत् पार्थ एव धनुर्धर इतिवत्, विशेषगतैवकारदर्शनाच्च । किञ्चाद्वितीयपदेनैव द्वितीयमात्रनिषेधसिद्धौ एकादिपदानां प्रयोगवैयर्थ्यात् नास्ति नासीन्न भविष्यदिति ब्रह्मान्यस्य कालत्रये निषेधं वदता अग्रपदं कालपदं द्वितीयपदं वस्तुपरं च न दृश्यते तेनेति ज्ञायते । किञ्चाद्वितीयपदेन श्रुत्या स्वविहितद्वितीयाभावेऽनिषेधे स्वव्याघातो निषेधेन तेनैवाद्वितीयत्वहानिरित्युभयथाप्यसामञ्जस्यमेव नाभावो द्वितीयोऽद्वैतविरोधीतिचेत् ? न, अभावत्वाधेयत्वाधारत्वादिभावैरविनाभूतेनाभावेनातिशयतोऽप्यद्वैतभङ्गात् । तस्मात् सकलमानाविरोधाय स्वतन्त्रद्वितीयपरतायै अभावरूपप्रवृ-

त्तिनिमित्तसम्भवेन वेदान्तानां सखण्डार्थत्वापाताच्च। नचावान्तरतात्पर्य्येण द्वितीयाभावसिद्धिर्महातात्पर्येण खण्डार्थसिद्धिश्चेति वाच्यम्, द्वितीयाभावसत्यत्वेऽद्वैतभङ्गात् मृषात्वे द्वितीयस्य सत्यत्वापत्तेः। द्वितीयाभावतया ज्ञाते ब्रह्मणि विशेष्यमात्रे सन्देहाद्यभावेन तत्र तात्पर्यकल्पनाया अप्रमाणत्वात्। अन्यथा शब्दमात्रस्य तात्पर्यद्वयाङ्गीकारेणाखण्डार्थकतापत्तेः। किञ्च सच्छब्देनात्र को वाऽर्थो विवक्षितः? शुद्धं वा मायोपहितं वा तदध्यासाधिष्ठानं वा? नाद्यः, तस्यापदार्थत्वाभ्युपगमात्। अन्यथा वाच्यत्वापत्त्या तव मते घटादिवन्मिथ्या स्यात् सविशेषत्वापत्तेश्च। नापि द्वितीयः, तत्र मायाभेदस्य त्वयाऽऽनङ्गीकारात्। तथात्वेचोपहितचितो मायापदार्थो भिन्नो वाऽभिन्नइति विवेचनीयम् नाद्यः, अद्वैतहानेः। द्वितीये, अविद्यारूपमेव ब्रह्मेति सिद्धान्तापत्तेः। नापि तृतीयः, विशिष्टत्वाभ्युपगमप्रसङ्गात्, अध्यस्तस्योपहितोत्तरभावित्वात्। एतेनाभेदवाक्यं प्रबलं षड्लिङ्गोपेतत्वादिति निरस्तम्, वाक्यमात्रस्य सविशेषपरत्वात्, शुद्धस्याप्रमेयत्वाङ्गीकारेण शशशृङ्गायमाणत्वात्, सच्छब्दस्य सत्ताश्रयवाचकत्वाच्च। ननु सच्छब्दस्य सत्ताधर्मवद्वाचकत्वेऽपि भागलक्षणया विशेष्यमात्रे तात्पर्यान्नोक्तदोष इति चेत्? न, लक्षणायां बीजाभावात् गौणार्थस्य निर्णायकत्वायोगाच्च। अस्तु वा स्वकपोलकल्पनया सच्छब्दस्य सत्तामात्रपरत्वं लक्षणया तथापि धर्मवाचकपदस्य धर्मिसापेक्षत्वावश्यम्भावेन स्वाश्रयं विनावस्थानायोगात् स्वाश्रयं आक्षिपत्येव तथात्वे द्वैतापत्तिर्दुवारा। किञ्च सच्छब्दलक्षिता सत्ता स्वपदवाच्या नवेति? नाद्यः, अपदार्थत्वप्रतिज्ञाहानेः, अद्वैतभङ्गाच्च। नापि द्वितीयः, अवाच्यस्य लक्ष्यत्वाभावात् वाच्यत्वलक्ष्यत्वयोः सामानाधिकरण्यनियमात्। तथाचासत्त्वमेव स्यात्। शुद्धं ब्रह्म मिथ्या अपदार्थत्वात् खपुष्पगन्धवत् सदसद्भिन्नत्वात् शुक्तिरजतवदित्यादिप्रयोगादित्यलं विस्तरेण, कुतर्कनिरासैश्च। तस्मात्स्वतन्त्रसत्ताश्रयः प्रभुस्त्वमेक एव। "आत्मा हि परमः स्वतन्त्रो ह्यगुण" इति श्रुतेः। त्वत्समोऽचेतन इह लोके वेदे च नास्ति परतन्त्रसत्तावत्त्वाद्विश्वस्य "यदासीत्तदधीनमासीत्" इति श्रुतेः। अधिको नास्तीति किमुत वक्तव्यमिति वाक्यार्थः। यस्मादित्थम्भूतनिरङ्कुशैश्वर्यादिकस्त्वमसि तस्मात्त्वां शरणं प्रयामि साधनसाध्य-

सम्बन्धभावैस्त्वामेवाभ्युपगच्छामित्यर्थः । तत्र-*शरण्यकमिति* । शरण्य एव शरण्यकस्तम् । "यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" "सर्वस्य शरणं सुहृत्" इत्यादिश्रुतेः ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥
(भ० गी० १८अ० ६६ श्लो०)

इति भगवदुक्तेश्च । तत्र सौकर्य्यव्यञ्जनाय प्रवक्ष्ये भगवति सौन्दर्यादिगुणं विदधन्नाह-*पुण्डरीकनयनमिति* । पुण्डरीकव-दतिसुन्दरे सुकुमारे नयने यस्य तं "सत्पुण्डरीकनयनं मेघाभं वै-द्युतांबरम्" इति मन्त्रवर्णात् । एतेन ब्रह्मादिश्वपाकान्तानां शरण्य-त्वसाम्यं तस्य विग्रहवत्त्वं च व्याख्यातं बोध्यम् । एवं-*सुधानि-धिमिति* । माधुर्यसौन्दर्यलावण्यसौकुमार्यादिगुणगणवद्विग्रह एव सुधेव हेयांशशून्यत्वात् सुधा तस्य निधिमाश्रयमिति यावत् ॥ ३ ॥

त्वां विशिष्टगुणमात्मसुप्रियं दर्शनीयमुखपङ्कजश्रियम् ॥
स्पर्शनीयतनुवल्लरीश्रियं सेवनीयपदपङ्कजद्वयम् ॥ ४ ॥

शरण्यमेव विवृणोति द्वाभ्यां-*त्वां विशिष्टगुणमिति* । विशिष्टा उत्कृष्टतमा मोक्षहेतवः स्वरूपवदुपासनीया ज्ञानादयो वात्सल्यादयश्च गुणा यस्य तं तेषां मुक्तिहेतुत्वं वेदनाविषयत्वं च "आनन्दं ब्र-ह्मणो विद्वान्न बिभेति कुतश्चन" इत्यादि श्रुत्या बोध्यते । अनन्ता-चिन्त्यसंख्यातीतसद्गुणपूर्णमिति यावत् । गुणैर्विशिष्टं विशिष्टगुण-मितिविग्रहो वा अर्थस्तु समान एव । वात्सल्यं व्यञ्जयन्नाह-*आ-त्मसुप्रियमिति* । आत्मानः स्वानन्याश्रिताः क्षेत्रज्ञाः सुप्रिया निरति-शयप्रिया यस्य तम्, आत्मनां एकान्तभक्तानां ज्ञानिनां सुप्रियं प्रेष्ठं वा तेषामात्मत्वात् ।

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥
( भ० गी० ७ अ० १८ श्लो० )

प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः (भ० गी०७ अ०१७) इति भगवदुक्तेः । "सन्धिं च यागं सन्धत्ते ब्रह्मणे ईशो रमते त-

स्मिन्नुजीर्णे शयाने नैनं जहात्यहस्सु पूर्वेषु" इतितैत्तिरीयाम्नायाच्च। भक्तानां प्रियत्वे हेतून्वदन् ध्यानविषयमाह त्रिभिर्विशेषणैः–*दर्शनीयमुखपङ्कजश्रियम् *। इत्यादिभिः। दर्शनीया चक्षुर्विषयीकर्तुमर्हा मुखपङ्कजसम्बन्धिनी श्रीः शोभा यस्य तं भक्तानुग्रहतत्परस्निग्धकारुण्यव्यञ्जककमनीयकटाक्षाश्रयदृग्युक्तमुखपङ्कजशोभाकरमित्यर्थः। *स्पर्शनीयतनुवल्लरीश्रियमिति*। स्प्रष्टुमर्हा तनुवल्लर्याः सम्बन्धिनी श्रीः शोभा यस्य तम्, अङ्गप्रत्यङ्गमाधुर्य्यलावण्यसौन्दर्य्यमार्दवसौकुमार्यादिनिधिमित्यर्थः। *सेवनीयपदपङ्कजद्वयमिति*। श्रेयस्कामैः प्रेयस्कामैर्वा साधारणत्वेन तत्तत्फलसिद्धये सेवितुमर्हं पदपङ्कजद्वयं यस्य तम्। एतच्च मुखादारभ्य पादपर्यन्तध्यानस्योपलक्षणार्थः। "एषोऽन्तरादित्ये हिरणमयः पुरुषो दृश्यते हिरण्यकेशःहिरण्यश्मश्रुराप्रणखात्सुवर्णः। आनन्दमूर्त्तिममृतं यद्विभाति यदात्मको भगवांस्तदात्मिका व्यक्तिः किमात्मको भगवान्? ज्ञानात्मक ऐश्वर्यात्मकः" इत्यादिश्रुतिभ्यः। *वैष्णवपुराणे* और्वः—

भौमान्मनोरथान्सर्वान्स्वर्गिवन्द्यं तथास्पदम्।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम्॥

तत्रैव *मरीचिः*—

अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज।
नहि संप्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम्॥

*पुलस्त्यः*—

परं ब्रह्म परं धाम योऽसौ ब्रह्म तथा परम्।
तमाराध्य हरिं याति मुक्तिमप्यतिदुर्लभाम्॥

*पुलहः*—

ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम्।
प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत।

तत्रैव *वसिष्ठः*—

प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति।
त्रैलोक्यान्तर्गतं स्थानं किमु वत्सोत्तमोत्तमम्॥

तत्रैव *प्राचीनबर्हिः*—

धर्ममर्थं च कामं च मोक्षतामिच्छता सदा।
आराधनीयो भगवाननादिः पुरुषोत्तमः॥

*मोक्षधर्मे नरनारायणः*—

स्वर्गस्था अपि ये केचित्तं नमस्यन्ति देहिनः ।
ते तत्प्रसादाद्गच्छन्ति तदादिष्टफलाङ्गतिम् ॥

*भगवद्गीतायां—

येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥

( भ० गी० ७ अ० २८ श्लो० )

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।

इत्यादिस्मृतिभ्यश्च । "फलमत उपपत्तेः" "तन्निष्ठस्य मोक्षव्यपदेशात्" इत्यादिसूत्रेभ्यश्च ॥ ४ ॥

तत्र सदाचारं प्रमाणयति—

ब्रह्मरुद्रसुरराजस्वर्चितं पार्चितं च रमयाङ्कमालया ।
चर्चितं च नवगोपबालया प्रेमभक्तिरसशालिमालया ॥ ५ ॥

*ब्रह्मरुद्रसुरराजस्वर्चितमिति* । ब्रह्मा चतुर्मुखो रुद्रस्त्रिनयनस्त्रिपुरान्तकः सुरराजः सहस्राक्षो महेन्द्रस्तैः स्वर्चितम् अर्चनवन्दनध्यानस्तवनादिविषयभूतम् । उपलक्षणं चैतत्सर्वेषां देवानां, तेषां देवानां तेषां जनकत्वात्तदुपदेष्टृत्वात् , तत्तत्पदप्रापकत्वाच्च । "यं सर्वे देवा नमन्ति" इत्यादिश्रुतेः । *वैष्णवे ब्रह्मा*—

एते वयं वृत्ररिपुस्तथायं नासत्यदस्रौ वरुणस्तथैषः ।
इमे च रुद्रा वसवः ससूर्याः समीरणाग्निप्रमुखास्तथाऽन्ये ॥
सुरा समस्ताः सुरनाथकार्य्यमेभिर्मया यच्च तदीश सर्वम् ।
आज्ञापयाज्ञां प्रतिपालयन्तस्तवैव तिष्ठाम सदास्तदोषाः ॥

तत्रैव ऋषय ऊचुः—

एष ब्रह्मा तथैवायं सह रुद्रैस्त्रिलोचनः ।
सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ॥
अश्विनौ वसवश्चेमे सर्वे चेमे मरुद्गणाः ।
साध्या विश्वे तथादेवा देवेन्द्रश्चायमीश्वरः ॥
प्रणामप्रवणा नाथ दैन्यसैन्यपराजिताः ।
शरणं त्वामनुप्राप्ताः समस्ता देवतागणाः ॥

तत्रैवादितिः--

ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा।
विष्णुमायामहागर्तमोहान्धतमसावृताः॥
आराध्य त्वामभीप्सन्ते कामानात्मविशुद्धये।

तत्रैव कालियः--

ब्रह्माद्यैरर्च्यते दिव्यैर्यश्च पुष्पानुलेपनैः।
नन्दनादिसमुद्भूतैः सोऽर्च्यते वा कथं मया॥

एतेनैव "हिरण्यगर्भः समवर्त्तताग्रे" "आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" "विरिञ्चो वा जगद्विरेचयति विदधातीति ब्रह्मा वा विरिञ्चः" "एको रुद्रो न द्वितीयाय तस्थुः" "यो देवानां प्रभवश्चोद्भवश्च" "न सन्नचासच्छिव एव केवलः" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतयो व्याख्याताः। आभिस्तेषां यत्किञ्चिदैश्वर्य्यवत्त्वश्रवणेऽपि जन्यत्वकर्मतन्त्रत्वादिक्षेत्रज्ञासाधारणधर्मयोगश्रवणात् न परत्वयोगः। "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः तस्य ललाटात्र्यक्षः शूलपाणिः पुरुषो ऽजायत तत्र ब्रह्मा चतुर्मुखो ऽजायत" "यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै" "अस्य देवमीढुषोदया विष्णोरेव वव्रुधे हविर्भिः" "दिदेह रुद्रो रुद्रीयमहत्त्वं सोऽब्रवीद्वरं वृणीष्व अहमेव पशूनामधिपतिरसानीति, तस्माद्रुद्रः पशूनामधिपतिः" इत्यादिश्रुतिभ्यः।

भारते—

युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुमः॥
मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत्स्वयम्।
ततस्तस्य वरान्प्रीतो ददावहमनुत्तमम॥
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च इति।
विश्वरूपो महादेवः सर्वयज्ञे महाक्रतौ॥
जुहाव सर्वभूतानि स्वयमात्मानमात्मना।
महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव इति॥
ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः॥

इति नारसिंहे।

नारायणीयेच--

ते देवा ऋषयश्चैवं नानातनुसमाश्रिताः।
भक्त्या सम्पूजयन्त्येनं गतिं चैषां ददाति सः।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः।
वेददृष्टेन विधिना वैष्णवं क्रतुमारभन्॥
प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्।

तत्रैव *भगवान्*—

येन यः कल्पितो भागस्स तथा मामुपागतः।
प्रीतोऽहं प्रददाम्यद्य फलमावृत्तिलक्षणम्॥

इत्यादिस्मृतिभ्यश्च। क्वचिद्ब्रह्मशिवपुराणादौ तेषां परत्वयोगे स्मर्यमाणेऽपि प्रबलसात्त्विकशास्त्रविरोधाद्धेयत्वमेव श्रेयोऽर्थिभिः संसरणहेतुत्वात्।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः॥
ताः सर्वा निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः (१२-९॥)

इति *मनुवाक्यात्। अलं विस्तरेण। अथ लक्ष्म्या वैशिष्ट्यं विदधन्नाह-*पर्चितं च रमयेति*। रमया लक्ष्म्या च पर्चितं नित्यसम्बन्धतया पूजनेऽभ्युपगतम्। तत्पूजाप्रकारमाह-*अङ्कमालयेति* अङ्क एव माला तया कृत्वेत्यर्थः। "श्रियं लोके देवजुष्टामुदाराम्" इति मन्त्रवर्णात्। "जुष प्रीतिसेवनयोः" ततः कर्तरि निष्ठा देवं श्रीभगवन्तं जुषते सेवते प्रीणयतीति वा तथा तामिति। उदारां पुरुषार्थदात्रीमिति मन्त्रार्थः।

का त्वन्या त्वामृते देवि सर्वयज्ञमयं वपुः।
अध्यास्ते देवदेवस्य योगिचिन्त्यगदाभृतः॥

इति *विष्णुपुराणे*। अथ श्रीराधिकाया वैशिष्ट्यमाह-*चर्चितं च नवगोपबालयेति*। *वैष्णवे*।

अत्रोपविश्य सा तेन कापि पुष्पैरलङ्कृता
अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चितो यया
हस्तन्यस्ताग्रहस्तेयं तेन याति यथा सखी॥ इति।

अनयोर्मध्ये रमाया ऐश्वर्याधिष्ठातृत्वात्प्रथमनिर्देशः। अस्यास्तु प्रेमाधिष्ठातृत्वात्प्रेमप्रकर्षं व्यञ्जयन् विशिनष्टि-*प्रेमभक्तिरसशालिमालयेति*। प्रेमभक्तेः रसः फलं आनन्दमूर्त्तिः श्रीवासुदेवः "रसो

वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति श्रुतेः। स विद्यतेऽस्याः सा प्रेमभक्तिरसशालिनी सा चासौ माला चेति तयेति विग्रहः। वैजयन्तीव नित्यं कण्ठ सम्बद्धत्वात् पत्नीत्वसाम्याच्च "राधया माधवो देवो माधवेन च राधिका विराजते" इति ऋक्परिशिष्टश्रुतेः। "श्री श्च ते लक्ष्मीश्च पत्न्यौ" इति सूत्रमन्त्राच्च। चकारोऽत्र सत्यभामाया अपि भूमिरूपिण्या उपलक्षणार्थः। रमादिभिस्तिसृभिरनपायिनीभिः स्वासाधारणशक्तिभिर्नित्यमर्चितं स्वस्वाधिकारमर्यादानुसारेणेति वाक्यार्थः। एवंभूतमुपयामीति पूर्वेणैवाऽन्वयः॥ ५॥

श्रीपुरुषोत्तमस्य निरतिशयपरत्वेऽन्यदपि शास्त्रं प्रमाणयन्नाह—

किञ्च किञ्चिदिह विद्यते नहि त्वां विनाण्वपि तथाऽखिलेश्वर!॥
नेति नेति च निषेधिताश्रयस्तद्विशेषविषयोऽपि सम्मतः॥ ६॥

*किञ्चेति*। हे *अखिलेश्वर*। चेतनाऽचेतनरूपस्याखिलस्य नियन्तः "एष सर्वेश्वरः" इति श्रुतेः। इह लोके शास्त्रे वा त्वां स्वतन्त्रसत्ताश्रयं विना अण्वपि अण्डपरिमाणमात्रमपि वस्तुजातं स्वतन्त्रं सत् किञ्चिन्न विद्यते नोपलभ्यते; आत्मीयजातस्यात्मानं विना कार्यस्य कारणं विना व्याप्यस्य व्यापकं विना आधेयस्य चाधारं विना पृथक्त्वेनासिद्धत्वात्। "मनसैवानु द्रष्टव्यं" "नेह नानास्ति किंचन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवं विरजः" "पर आकाशादज आत्मा महान्ध्रुवः" इति श्रुतिभ्यः स्वतन्त्रं सत्किमपि वस्तुजातं ब्रह्मणः पृथङ्नास्ति "तं सर्वं पराद्याद्योन्यत्रात्मनः सर्वं वेद" इत्यादिश्रुतेः॥

न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥
(भ० गी० १० अ० ३९ श्लो०)

इतिस्मृतेश्च।

सर्वस्यापि स्वतन्त्रसत्ताकत्वात् "सदेव सौम्येदमग्र आसीत्" "आत्मा इदमेक एवाग्र आसीत्" इत्यादिवाक्यान्तरेभ्यइति श्रुत्यर्थः। तस्मात्स्वतन्त्रसत्ताश्रयः परब्रह्म त्वमेवेति वाक्यार्थः। ननु "अथात आदेशो नेति नेति अस्थूलमनण्वह्रस्वमदीर्घमलोहितच्छायम्।

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इ-

त्यादिभिर्वस्तुमात्रस्य सजातीयस्वगतधर्मादेश्च निषेधात्कथमु- क्तप्रकारं ब्रह्मेत्याशङ्कायां प्राकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय इत्यादि शास्त्रं व्याकुर्वन् स्तौति-*नेति नेति च निषेधिताश्रय इति* । प्राकृतस्थूलत्वादिधर्माश्रयं ब्रह्म न अपितु अप्राकृताचिन्त्यानन्तसङ्ख्यातीतस्वाभाविकगुणविग्रहादिकं तत्रापि नैतावदेव अपि तु अस्मादपि भूयः निरतिशयस्वरूपगुणादिकमिति निषेधितो यः प्रकृतितत्कार्यगुणादिः तस्याश्रयः प्राकृतदोषाभावरूपवैलक्षण्यरूपसार्वज्ञादिवदसाधारणधर्माश्रयस्त्वमसीति यावत । अन्यथा—

"तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते ॥

स्वाभाविकी ज्ञानबलक्रिया च" "यः सर्वज्ञः सर्ववित्" "यस्य ज्ञानमयं तपः" "भीषास्माद्वातः पवते भीषोदेति सूर्यः" ।

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्च न ॥

"एतस्य चाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः सर्वगन्धः सर्वरसः" इत्यादिश्रुतयः, यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥ (भ० गी० १० अ० ३ श्लो०;

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
( भ० गी० ९ अ० १० श्लो० )

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
( भ० गी० १० अ० ४२ श्लो० )

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
( भ० गी० १५ अ० १७ १८ श्लो० )

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
( भ० गी० ७ अ० ७ श्लो० )

सर्वकृत्सर्वशक्तिर्ज्ञानबलादिमान् ॥
अन्यूनश्चाप्यवृद्धश्च स्वाधीनो ऽनादिमान्वशी ।

कामतन्द्राभयक्रोधकर्मादिभिरसंयुतः ॥
निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरक्रमः ।

इत्यादिस्मृतयश्च बाधेरन् ताभिश्च ततो भूयस्त्वेन प्रतिपादितत्वादित्याह-*तद्विशेषविषयेऽपि सम्मत*इति । तस्मान्निषेधाद्विशेषस्तद्विशेषो भूयस्त्वप्रतिपादकशास्त्रं तस्य विषयः प्रतिपाद्यो वाच्य इतियावत् । त्वमेव सम्मतः शास्त्रस्य महर्षीणां चेति शेषः। "सर्वस्य वशी सर्वेशानः संसारबन्धस्थितिमोक्षहेतुः" "अक्षरात्परतः परः" इतिश्रुतिभिः । त्वत्स्वरूपगुणादीनामियत्ताद्यभावेन तन्निषेधेनैव निषेधशास्त्रस्यापि त्वय्येवान्वय इति भावः ॥ ६ ॥

इत्थं प्रमाणतो भगवत्स्वरूपगुणादीनां तत्वं निरूप्य तद्गतेयत्तां च निराकृत्य तेषामभिव्यक्तयेऽसाधारणहेतुभूतां भगवद्भक्तिं संप्रार्थयन् स्तौति--

त्वय्यणुत्वसुमहत्त्वभागिनि सर्वशक्तिबलयोगशालिनि ।
भक्तिरस्तु मम निश्चला हरे ! कृष्ण ! केशव ! महत्तमाश्रये ॥७॥

*त्वयीति* । हे *हरे* स्वभक्तपापहरणशील । हे *कृष्ण* सदानन्दरूप !

कृषिर्भूवाचकः शब्दो णश्च निर्वृत्तिवाचकः ।
तयोरैक्यं परंब्रह्म कृष्णइत्यभिधीयते ॥

इतिवचनात् । हे *केशव* ब्रह्मशिवादिजनक इति ।

ब्रह्म स्रष्टा च भूतानामीशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान् ॥

इति *हरिवंशे* शिववचनात् । *त्वयि मम भक्तिरस्त्विति* योजना । अथ अणोरणीयान्महतो महीयान्" इत्यादिश्रुत्यर्थमुद्घाटयन् विशिनष्टि-*अणुत्वसुमहत्त्वभागिनीति* । अणुत्वं च सुमहत्त्वं चाणुत्वसुमहत्त्वे तद्भजनशीलस्तथा तस्मिन्निति विग्रहः । तत्राणुत्वभजनम् अण्डपरिमाणकजीवस्यान्तरात्मतयावस्थानं, सुमहत्त्वभजनं सुमहतामव्याकृताकाशादीनामन्तरात्मतयावस्थानमिति विवेकः । "एष सर्वभूतान्तरात्मा" "दिव्यो देव एको नारायणः" "सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादिश्रुतेः ।

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
( भ० गी० १० अ० २० श्लो० )

इति भगवद्वचनाच्च। ननु अणुत्वमहत्त्वयोरितरेतरविरुद्धत्वात्कथं सामानाधिकरण्यमिति शङ्कां परिहरन् विशिनष्टि—*सर्वशक्तिबलयोगशालिनीति। शक्तिश्च बलं च योगश्च ते शक्तिबलयोगाः सर्वे च ते शक्तिबलयोगाश्च ते तथा तत्र योगशब्द ऐश्वर्यपरः एतान् शलितुं शीलं यस्य स तथा तस्मिन्निति समासः।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च।

(१)शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः॥

शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः।

भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता॥

इति शास्त्रकदम्बात्। अनन्ताचिन्त्यादिशक्तियोगान्नोक्तशङ्कावकाश इत्यर्थः। तत्र सदाचारं प्रमाणयन् विशिनष्टि *महत्तमाश्रये* इति। महत्तमाः सनत्कुमारनारदादयस्तेषामप्याश्रय आश्रयणीय इति यावत् तस्मिन्नित्यर्थः "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इत्यादिश्रुतेः॥ ७॥

अथ तत्त्वमस्यादिश्रुत्यर्थमनुसन्दधन् स्तौति—

तत्त्वमादिपदवाच्यविष्णवे जिष्णवेऽखिलगुरो! भविष्णवे।
आत्मनां यमयते प्रतेजसे नौमि ते मधुरिपो महौजसे॥८॥

*तत्त्वमादिपदवाच्यविष्णव* इति। तच्च त्वं च तत्त्वमौ पदे आदी येषां तानि तत्त्वमादीनि पदानि तेषां वाच्यश्चासौ विष्णुश्चेति तथा तस्मै तत्र सर्वज्ञः सर्वाचिन्त्यानन्तापरिमितगुणशक्त्याद्याश्रयो मुक्तोपसृप्यो मुमुक्षुध्येयो ब्रह्मेशेन्द्रादिवन्दनीयपादपद्मो वेदान्तवेद्यो विश्वजन्मादिहेतुर्विश्वान्तरात्मा भगवान्वासुदेवः श्रीपुरुषोत्तमस्तत्पदवाच्यः तदात्मकपरतन्त्रसत्ताश्रयक्षेत्रज्ञप्रत्यगात्माख्यान्तरात्मभूतः स एव च त्वं पदवाच्य इत्यवगम्यते सामान्यसत्ताश्रयोऽसिपदवाच्य इति। आदिना "अयमात्मा" "ब्रह्म सोऽहमस्मि" इत्यादीनां संग्रहो बोध्यः। ननु त्वं पदस्य क्षेत्रज्ञः प्रत्यगात्मा जीव एव वाच्यतया प्रसिद्धः कथं तदन्तरात्मा वासुदेवः? अप्रसिद्धत्वादनुपपन्नत्वादनुपस्थितत्वाच्चेतिचेत्? न, वैदिकशब्दमात्रस्य ब्रह्मवाचकत्वाभ्युपगमादौपनिषदैरितिब्रूमः यथाग्निशब्दः स्वशब्दवाचकः

---

(१) 'सर्वोपेता च शक्तयः' इत्यादर्शे।

"अग्नेर्ढक्" ( पा० सू० ४-२-३३ ) इत्यादौ तदर्थवाचकश्च "अग्नौ जुहोति" इत्यादौ मुख्यवृत्त्यैव उभयोरपि तच्छक्यत्वादिति शाब्दिकानां राद्धान्तः, यथा वा चतुर्मुखत्रिनयनादिशब्दाः पृथिव्यादिशब्दाश्च तत्तद्व्यक्तौ तत्तच्छरीरिणि चेतने तत्तद्भूतविशेषे तत्तदभिमानिदेवविशेषे च शक्ताइतिलौकिकप्रसिद्धः। तथैव चेतनाचेतनवस्तुजातपरा विश्वेऽपि शब्दास्तत्तत्पदार्थवाचका अपि तत्तदन्तरात्मभूतपरमेश्वरे शक्ता एवेति औपनिषदानां राद्धान्तः।

"नामानि सर्वाणि यमाविशन्ति सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतिभ्यः। एतदभिप्रायेण "सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यादिश्रुतीनां प्रवृत्तिस्तच्चाग्रिमश्लोके स्फुटीभविष्यतीति अलंविस्तरेण। तत्र हेतुमाह-*आत्मनां यमयते* इति। यमयति नियमयतीति तस्मै "य आत्मानमन्तरो यमयति" इतिश्रुतेः।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
( भ० गी० १८अ० ६१ श्लो० )

इतिगानाच्च। अतएव-*प्रतेजसे* इति। प्रकृष्टम् आदित्यादीनामपि प्रकाशकं तेजो यस्य स प्रतेजास्तस्मै "तं देवा ज्योतिषां ज्योति रायु(?)होपासते ऽमृतं परं ज्योतिरुपसम्पद्य" इतिश्रुतेः।

यदादित्यगतं तेजो जगद्भासयते ऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥
( भ० गी० १५ अ० १२ श्लो० )

इति श्रीमुखोक्तेश्च। अतएव—*जिष्णवेइति* जयनशीलाय सुरासुरचमूजेत्रे इति। तच्च श्रुतिस्मृतिपुराणेतिहासादिषु सुप्रसिद्धम्। तत्रापि हेतुः-*भविष्णवे*इति। संकल्पपूर्वकं भवनशीलाय "सोऽकामयत बहु स्यां प्रजायेय" "सच्च त्यच्चाभवत्" इत्यादिश्रुतेः। अतएव-*महौजसे*इति। महदोजो बलं शक्तिश्च यस्य स महौजास्तस्मै। एतेन भवनशीलत्वेऽपि विकारशङ्का व्युदस्ता अचिन्त्यशक्तियोगात्।

"परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"॥

इतिश्रुतेः सर्वधर्मोपपत्तेश्चेति न्यायाच्च। अतएव-*मधुरिपो*

उपलक्षणं चैतत् मधुकैटभहिरण्यकशिपुरावणशिशुपालादिहन्तः। अतएव-*अखिलगुरो* ब्रह्मादीनामप्युपदेष्टः "यो ब्रह्माणं विदधाति पूर्वं यो वा वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः। त्वदेकप्रयोजनोऽनन्यप्रयोजनश्चाहं *नौमि* त्वामिति कर्मपदमध्याहर्त्तव्यम् कस्मै प्रयोजनायेत्याशङ्कयाह–ते इति। तुभ्यं प्रयोजनरूपायेत्यर्थः। तवैव पुरुषार्थरूपत्वात्। त्वदन्यस्यानित्यत्वेन प्रयोजनत्वानर्हत्वादिति भावः। "मुक्तोपसृप्यत्वात्" इतिसूत्रात्।

मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे।

(भ० गी० १८ अ० ६५ श्लो०)

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते (भ० गी० ८ अ० १६ श्लो०) इत्यादिप्रतिज्ञावचनाच्च ॥ ८ ॥

अथ वाक्यार्थं निरूपयन्स्तौति—

ब्रह्मणो भवत आदिपूरुषाज्जायते यत इदं परेश्वरात्।
तन्नियामकतया तदात्मकं विश्वमेवमखिलं प्रचक्षते ॥ ९ ॥

*ब्रह्मण*इति। भवतो ब्रह्मणः निरतिशयबृहद्गुणशक्त्यैश्वर्यादिमतः "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहन्तो गुणा अस्मिन्निति ब्रह्म" इत्यादिश्रुतिभ्यः। "त्वं ब्रह्म परमं धाम" इति बृहत्त्वाद्बृंहणत्वाच्च। "तस्माद्ब्रह्म" इतिस्मृतेश्च। *अखिलमिदं* चेतनाचेतनं *विश्वं जायते* इत्यन्वयः "सदेव नामरूपव्याकरणं भजते" "नामरूपे व्याकरवाणीति नामरूपाभ्यां व्याक्रियते" इत्यादि श्रुतेः। सृष्टेः प्रागपि कार्यस्य कारणे त्वयि बीजेऽङ्कुरादेरिव सद्भावात्, "सत्त्वाच्चावरस्य" इत्यादिन्यायात्। एतेन प्रलयेऽपि कार्यस्य नामरूपाभ्यामनुपलब्धावपि तत्र भेदोऽपि सदैवेत्यवगम्यते "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशौ गौरनाद्यन्तवती" "अश्वत्थः सनातनः" "अष्टरूपामजां ध्रुवाम्" इति श्रुतिभ्यः।

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः सर्वे वयमतः परम् (भ०गी०२अ०१२श्लो०)

"अश्वत्थं प्राहुरव्ययम्" इत्यादिस्मृतेश्च। तत्सिद्धं चेतनाचेतनजगद्भेदस्य कालत्रयाबाध्यत्वं स्वाभाविकत्वात्। अन्यथा असत

उत्पत्त्यभ्युपगमे कृतनाशाकृताभ्यागमप्रसङ्गात् । अजहत्त्वादिविषय- शास्त्रबाधापत्तेश्च । इत्थं भेदस्य स्वाभाविकत्वं निरूपितम् इदानीं तदभेदस्यापि स्वाभाविकत्वमेवेत्याह—*तदात्मकमिति* । स एव भवान्परब्रह्मभूतः आत्मा यस्य तत्तदात्मकमिति विग्रहः तदात्मीय इत्यर्थः । आत्मीयस्यात्मनोऽपृथक्सिद्धत्वात् । "एष सर्वभूतान्तरा- त्मा"इत्यादिश्रुतेः । अखिलं विश्वं तदात्मकत्वादभिन्नं प्रचक्षते इत्यर्थः । हेत्वन्तरमाह-*तन्नियामकतयेति । नियामकत्वेऽपि हेतुः-*परे- श्वरात्* 'एष सर्वेश्वरः' "तमीश्वराणां परमं महेश्वरम्" इत्यादि- श्रुतेः । *आदिपूरुषादिति* । आदिः कारणं "पूर्वमेवासं तत्पुरुषस्य पुरुषत्वम्" इतिश्रुतेः । एतदुक्तंभवति-शास्त्रे तावत् "सदेव सौम्ये- दमग्रआसीत्" "एकमेवाद्वितीयम्" "आत्मावा इदमेक एव आसीत्" "एको ह वै नारायण आसीत्" "तत्त्वमसि" "अयमात्मा ब्रह्म" "सर्वं खल्विदं ब्रह्म" इत्याद्यभेदवाक्यानि "नित्यो नित्यानां चेतनश्चेतना- नाम्" "पृथगात्मानं प्रेरितारं च मत्वा भोक्ता भोग्यं प्रेरितारं च मत्वा" "प्रधानक्षेत्रज्ञपतिः" "अक्षरात्परतः परः" "सर्ववशी" "सर्वस्ये- शानः" "भेदव्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्" इत्यादि- भेदपराणि, "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद"इत्यादिभेदनि- षेधविषयकाणि, "अथात आदेशो नेतिनेति" इत्यादीनि स्थौल्या- दिनिषेधपराणि दृश्यन्ते न तेषामितरेतरबाधकभावो युक्तः, तुल्यब- लत्वात् । षड्लिङ्गोपेतत्वसाम्याच्च । तस्मात्सर्वेषामपि स्वार्थप्रामाण्य- सिद्धये भिन्नाभिन्नं ब्रह्म सूत्रकृतोऽभिप्रेतं तद्धटकसूत्रं च "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयते एके उभय- व्यपदेशात्त्वहिकुण्डलवत्" इत्यादि । अतश्चैवंवाक्यार्थः-जगद्ब्रह्मणो- स्सामानाधिकरण्यादस्य जगतो ब्रह्मात्मकत्वेन तदायत्तस्थितिप्रवृ- त्तिकत्वेन तद्व्याप्यत्वेन च स्वार्थपरत्वं समञ्जसम् । तदेवात्रोक्तम् । *अखिलं विश्वं तदात्मकं प्रचक्षते इति* । यद्यदात्मकं तत्तदभिन्न- निर्देशार्हं । चतुर्मुखादिपिण्डवत् । अद्वितीये हेतुमाह *तन्नियाम- कतयेति* । तत्तन्त्रस्थितिप्रवृत्त्यादिना यद्यदायत्तस्वरूपकं तत्तदभि- न्ननिर्देशार्हं प्राणेन्द्रियवत् । 'नवै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राण इत्येवाचक्षते प्राण एवैतानि भवन्ति" इति *छान्दोगाम्नायः* । तद्व्याप्यत्वे हेतुमाह—*आदिपूरुषाद्भवतो

ब्रह्मणः परेश्वरादिदमखिलं विश्वं जायत इति* । तदुपादेयकार्यत्वात्तद्व्याप्यव्याप्यस्यव्यापकाभेदाद्दित्वं ह्यर्जुनेनोक्तं "सर्वं समाप्नोषि ततोऽसि सर्वः" इति । तथा च श्रुतिः "एष सर्वभूतान्तरात्मा एष मे आत्मान्तर्यामी एष ते आत्मान्तर्यामी" इत्यादि ।

इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च (वि० स० ना०)

इत्यादिस्मृतिः ।

"आत्मेति तूपगच्छन्ति तथैव ग्राहयन्ति च"

इति सूत्रात् । तस्मात्स्वतन्त्रसत्ताश्रयस्य ब्रह्मण ऐक्यात्तद्विषयकत्वेनाभेदश्रुतीनां स्वार्थे एव प्रामाण्यं स्वतन्त्रसत्त्वं च आत्मायत्तस्थितिप्रवृत्तिमत्त्वम् । ( तच्च ) नियन्तृत्वादिवदसाधारणधर्मविशेषः तदा श्रीभगवान्वासुदेवो ब्रह्मनारायणपरमात्मादिशब्दाभिधेयो नियन्ता नियन्तृत्वस्वतन्त्रसत्त्वयोः सामानाधिकरण्यनियमात् "सदेव सौम्येदमग्र आसीत्" "एतदक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" "स कारणं कारणाधिपाधिपः" "न तस्य कश्चिज्जनिता नचाधिपः" "सर्वस्येशी सर्वस्येशानः" इत्यादिश्रुतेः । परतन्त्रसत्ताश्रयस्य विश्वस्य च भिन्नत्वाच्चद्विषयकत्वेन भेदवाक्यानां स्वार्थे एव प्रामाण्यं परतन्त्रसत्त्वं च परायत्तस्थितिप्रवृत्तिमत्त्वम् । तच्च नियम्यत्वादिवदसाधारणधर्मविशेषः, नियम्यवर्गचेतनाचेतनरूपविश्ववृत्तिसर्वस्य तदात्मीयत्वात् तस्य स्वात्मायत्तस्थितिप्रवृत्तिमत्त्वात् । "यदासीत्तदधीनमासीत्" इत्यादिश्रुतेः । "मत्तः सर्वं प्रवर्तते" इतिस्मृतेश्च ।

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशेऽवर्त्ततेदं कृष्णस्य सचराचरम् ॥ ( वि० स० ना० )

परतन्त्रसत्ता द्विधा कूटस्थविकारिभेदात् । कौटस्थ्यं च विकारशून्यत्वे सति नित्यत्वं तदाश्रयो जीवात्मा क्षेत्रज्ञप्रत्यगात्मादिशब्दवाच्यश्चेतनवर्गः "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" "न जायते म्रियते वा विपश्चित्" इत्यादिश्रुतेः ।

अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे
( भ० गी० २ अ० २० श्लो० )

इत्यादिस्मृतेश्च। विकारवत्त्वे सति नित्यत्वं द्वितीयम्। तदधिकरणं चाचेतनवस्तुमायाप्रधानक्षेत्रप्रकृत्यादिपदाभिधेयम्। "अजामेकां लोहितशुक्लकृष्णाम्" "गौरनाद्यंतवती" "अष्टरूपामजां ध्रुवाम्" इत्यादिश्रुतेः।

त्रिगुणं तज्जगद्योनिरनादिप्रभवाव्ययम्।
अचेतना परार्था च नित्या सततविक्रिया॥
तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।
आविर्भावतिरोभावजन्मनाशविकल्पवत्॥

इत्यादिस्मृतेश्च। एवमेव स्वतन्त्रसत्तावच्छिन्नाद्भिन्नद्वितीयवस्तुनिषेधेन भेदनिषेधवाक्यानामपि स्वार्थपरत्वमविरुद्धमिति समन्वयप्रकारः। इत्थं च विश्वात्मपरब्रह्मसर्वज्ञस्वतन्त्रसत्ताश्रयतत्पदार्थाभिन्नतदात्मकचेतनपरतन्त्रसत्ताश्रयत्वं पदार्थावच्छिन्नसर्वान्तरात्मा भगवान्वासुदेवस्त्वं पदार्थोऽसीति "तत्त्वमसि" इतिश्रुत्यर्थ इति *सिद्धान्तसेतुकायां सुन्दरभट्टपादै*र्विस्तरान्निरूपितमत्र विस्तरादुपरम्यते। विश्वात्मा चासौ परब्रह्म सर्वज्ञश्चासौ स्वतन्त्रसत्ताश्रयश्चासौ तत्पदार्थश्च तदात्मकश्चासौ परतन्त्रसत्ताश्रयश्च त्वंपदार्थस्तदवच्छिन्नो यः सर्वान्तरात्मा भगवान्वासुदेवस्तथा स तत्पदार्थश्चासौ त्वं पदार्थश्च स्वतन्त्रसत्ताश्रय इत्यर्थः। पदार्थप्रकारश्च पूर्वश्लोके निरूपितः। परतन्त्रसत्ताश्रयस्य क्षेत्रज्ञस्यान्तरात्मा वासुदेवस्त्वं पदार्थः। स च सार्वज्ञादिस्वतन्त्रसत्ताश्रयाभिन्नमेव तत्त्वमिति संक्षेपः। नन्वेकस्मिन्वस्तुनि परस्परविरुद्धधर्मयोः समावेशस्यात्यन्तानुपपन्नत्वात् सूत्रविरुद्धमेव वेदान्तिभिर्भेदाभेदपक्षस्य समाश्रयणमिति केचिदाहुः तन्न, अनाकलितत्वात्। तथाहि, नतावत्स्वरूपभेदाभेदयोः स्वस्मिन्नभ्युपगमः अपि तु चेतनाचेतनविश्ववृत्तिपरतन्त्रसत्तालक्षणस्य जीवाद्यसाधारणधर्मस्य भेदः स्वस्य स्वतन्त्रसत्ताश्रयस्य चाभेद इति स्वस्मिन्स्वाभेदे न तावद्विवादा (नव)काशः परतन्त्रसत्ताभेदस्यापि विश्ववैलक्षण्यपर्य्यायत्वात् अस्थूलादिश्रुतिसिद्धत्वाच्च। सार्वज्ञादिवद्भावरूपपरमेश्वरासाधारणधर्मत्वमेव न कथमपि विरोधापत्तिशङ्कालेशस्पर्शावकाशः नियम्यवृत्तिपारतन्त्र्यभेदस्य च नियन्तृत्वसामानाधिकरण्यनियमात्। नचैवं वस्तुपरिच्छेदापत्तिप्रसङ्गो दुर्वार इति वाच्यम् विश्वस्य तदात्मक-

त्वेन तत्रापि तद्व्याप्तेः शास्त्रसिद्धत्वात् ।

यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इति श्रुतेः ।

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ( भ० गी० ९ अ० ४ श्लो )
"सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादिस्मृतेश्च । अन्यथा "अणोरणीयान्महतो महीयान्" इत्यादिश्रुतिसिद्धयोरणीयस्त्वमहीयस्त्वयोरपि परस्परविरुद्धत्वाविशेषात्त्यक्तव्यमेव भवद्भिर्वैदिकैः । न च तयोः श्रुतिमूलत्वाद्व्यवस्थैव युक्ताऽन्यथा श्रुतिबाधप्रसङ्ग इति वाच्यम् प्रकृतेऽपि साम्यात् । "द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादि "तत्त्वमसि" "सर्वं खल्विदं ब्रह्म" इति श्रुतिभिरुभयोरपि भेदाभेदयोः सिद्धत्वात् ब्रह्मण्यचिन्त्यानन्तशक्त्यादियोगस्य विरुद्धपरिहारासाधारणस्य हेतोरावयोरविशेषात् । नच तर्हि जीवादिधर्माणामपि तत्राङ्गीकार्यं विरुद्धत्वाविशेषादितिवाच्यम्, शास्त्रनिषिद्धत्वात् । न चैवं भेदस्यापि "तं सर्वं परादाद्यआत्मनोऽन्यत्र सर्वं वेद" इत्यादिना निषेधश्रवणात्तदभ्युपगमोऽपि विरुद्ध एवेति वाच्यम् तस्य स्वतन्त्रसत्ताकद्वितीयविषयकनिषेधपरत्वेन नैराकाङ्क्षत्वस्य पूर्वमेवोक्तत्वात् । चेतनाचेतनवृत्तिभेदस्य भवद्भिरपि स्वरूपवत् स्वाभाविकत्वाभ्युपगमाच्च । भेदविषयकयोगक्षेमस्यावयोस्तुल्यत्वादिति संक्षेपः । ननु स्यादेतत् भिन्नं ब्रह्मेति तथापि भिन्नाभिन्नस्वरूपोभयव्यपदेशसिद्धये ब्रह्मैवाचिद्रूपाकारेण परिणमत इति युष्माकं प्रक्रिया तथासति ब्रह्मणो निर्दोषताबाधोऽपरिहार्य्यइतिचेत् ? न, स्वरूपगतपरिणामानङ्गीकारात् । तर्हि कथं वा परिणाम इति चेत् शक्तिविक्षेप एव परिणामशब्दाभिधेय इति ब्रूमः । यथोर्णनाभ्यादेरूर्णावितानेऽपि तावन्मात्रशक्तिविशेषयोगान्निर्विकारवत्ताऽप्यविरुद्धा प्रत्यक्षसिद्धत्वात् तद्वत्प्रस्तुतेऽपि ब्रह्मणोऽचिन्त्यशक्तियोगादेकशक्तिविक्षेपद्वारा तत्तदन्तरात्मत्वेन तत्तदाकारापत्तिर्निर्विकारित्वं च सुशकमेव वक्तुं "यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात्केशलोमानि भवन्ति यथा पृथिव्या औषधयः सम्भवन्ति तथाऽक्षरात्संभवतीह विश्वम्" इतिश्रुते ः ।

प्रसार्य्य च यथाङ्गानि कूर्मः संहरते पुनः।
तद्वद्भूतानि भूतात्मा सृष्टानि ग्रसते पुनः॥

इतिभारतोक्तेश्चेत्यलंविस्तरेण। विस्तृतं चैतत् श्रीदेवाचार्यपादैः सिद्धान्तजाह्नव्याम्॥ ९॥

एवं वाक्यार्थं निर्णीय भगवदाविर्भावादितत्त्वं निरूपयन्स्तौति–

जन्मकर्म्मगुणरूपयौवनं दिव्यमेव कवयो वदन्ति ते।
श्रौतवाद उपलभ्यते तथा निर्विशेषचिति मङ्गलालये॥ १०॥

*जन्मकर्मगुणरूपयौवनमिति*। *कवयः* व्यासादयः *ते* श्रीभगवतः पुरुषोत्तमस्य श्रीवासुदेवस्य जन्मादि *दिव्यमेव वदन्ति* मोक्षहेतुतया अलौकिकत्वेन प्रतिपादयन्तीति यावत्। जन्मानि च कर्माणि च गुणाश्च रूपाणि च यौवनं चेत्येषां समाहारः जन्मकर्मगुणरूपयौवनमिति। तत्र जन्मानि श्रीरामकृष्णनृसिंहहयग्रीवाद्यनेकरूपावतारैरजहद्गुणशक्त्यादिना स्वेच्छयाऽऽविर्भावविशेषाः। तच्च वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्य्यपादैर्विस्तरशः प्रोक्तम्। कर्माणि जगत्सृष्ट्यादीनि हिरण्यकशिपुरावणशिशुपालकंसवधादीनि गोवर्द्धनोद्धरणब्रह्मशिवादिनिरोधादीनि नवनीतचौर्य्यरासक्रीडादीनिच। गुणा ज्ञानादयो वात्सल्यकारुण्यदयातितिक्षादयः। रूपाणि द्विभुजचतुर्भुजसहस्रशीर्षादीनि आकृतिविशेषभूतानि। यौवनं यूनो भावो युवत्वमिति यावत्। उपलक्षणं चैतत् रूपवृत्तिगुणानाम्। यौवनं लावण्यमाधुर्य्यसौन्दर्य्यसौकुमार्य्यादयो रूपगुणा इत्यर्थः। तथा च *पञ्चरात्रे*—

नित्यासाधारणानेकलोकरक्षापरिच्छदे।
सच्चिदानन्दरूपाय वरेण्याय नमोनमः॥
नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत।
अच्युतायाविकाराय तेजसां निधये नमः॥
क्लेशकर्माद्यसंस्पृष्टपूर्णषाड्गुण्यमूर्त्तये।
त्रिभिर्ज्ञानबलैश्वर्यवीर्य्यशक्त्योजसां गुणैः॥
त्रिगुणाय नमस्तेऽस्तु नमस्ते चतुरात्मने।

इत्यादि वचनात्।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥

(भ० गी० ४ अ० ९ श्लो०)

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।
(भ० गी० ११ अ० ५ श्लो०)

इत्यादिना श्रीमुखोक्तेश्च । उक्तार्थस्य श्रुतिमूलकतां दर्शयन्नाह *श्रौत (१)वाद उपलभ्यते तथेति* । तथा कव्युक्तिरूपनिर्णयानुसार एव वेदवाद उपलभ्यते । 'त्वयि' शब्दमध्याहृत्यात्र योजनीयम् । कः विनिर्णीत एव वेदवादस्त्वयि उपलभ्यते इतियावत् । वेदानां वादो बुभुत्साफलकवाग्विसर्गो निर्णय इति । तत्र जन्मविषयो वादः "अजायमानो बहुधा विजायते" इति । "अथैनमाहुः सत्यकर्म इति सत्यं ह्येवेदं विश्वमसौ सृजते" "अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते" इत्यादिकर्मविषयो वादः । "तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजतं वासः" "आदित्यवर्णं तमसः पुरस्तात्" ।

"यदापश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥

अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकं ईशानो भूतभव्यस्य स एवाद्यः स ईश्वरः तमेकं गोविन्दं सच्चिदानन्दविग्रहम्" इतिरूपविषयो वादः । "अयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूमम्" "आप्रणखात्सुवर्णः" ।

"तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।
चिदानन्दभुजं ज्ञानसुखैकपदकाङ्गुलिम् ॥
आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम् ।
ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन्" ॥
यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।

"सत्यकामः सत्यसंकल्पः" "स्वाभाविकी ज्ञानबलक्रियाच" इति गुणविषयो वादः । "गोपवेषमभ्राभं तरुणमिति" "सर्वगन्धः सर्वरसः" "सर्वमिदमभ्यात्तो वाच्यनादरः" इति रूपवृत्तिगुणविषयवादः । अन्याश्चापि श्रुतयोऽत्रानुसन्धेयाः । किञ्च पूर्वोक्तकर्ममेव सविशेषनिर्विशेषरूपश्रीभगवन्तं मुमुक्षुभ्यः स्मारयन् विशिनष्टि पदाभ्यां—*निर्विशेषचिति मंगलालये इति* । निर्गतः पूर्वोक्तकर्मतज्जन्यक्लेशादिप्राकृतधर्मसम्बन्धलक्षणविशेषो यस्मात्स चासौ चिच्च तस्मिन्

(१) 'वेदवाद' इत्यादर्शे ।

स्वभावतो निरस्तसमस्तहेयगन्धे इति यावत्। अत एव मङ्गलालये निःशेषक्लेशादिनिवृत्त्यसाधारणोपयिकानामनन्ताचिन्त्यासंख्येयस्वाभाविककल्याणरूपाणां मङ्गलहेतुभूतानां सद्धर्मविशेषाणाम् आलयोऽसाधारणनिवासस्तस्मिन्। तच्च पूर्वमेव शास्त्रमुखेन प्रतिपादितं "निर्गुणं तदिति वैदिकं वचः" (२)इति श्लोकेन। कल्याणधर्माश्च जगत्कारणत्वशास्त्रयोनित्वमोक्षहेतुत्वसर्वकर्मफलदातृत्वविश्वाधारत्वसर्वनियन्तृत्वानतिक्रमणीयत्वादयोऽसंख्याताः "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः" "स कारणं करणाधिपः" "जन्माद्यस्य यतः" "सर्वे वेदा यत्पदमामनन्ति" "तद्वेदगुह्योपनिषत्सु गूढं तं त्वौपनिषदं पुरुषं पृच्छामः" "शास्त्रयोनित्वात्" "संसारबन्धस्थितिमोक्षहेतुः" "तन्निष्ठस्य मोक्षव्यपदेशात्" "कर्माध्यक्षः फलमत उपपत्तेः" "यस्मिँल्लोकाः श्रिताः सर्वे यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्" "नमः सहस्रप्राणैश्च सर्वैः" "द्युभ्वाद्यायतनं" "सर्वाँल्लोकानीशते ईशिनीभिः' "सर्वस्य वशी सर्वस्येशानः' "तदु नात्येति कश्चन"इत्यादिशास्त्रात् इत्थं ब्रह्मधर्माणां गुणशक्त्यादीनां श्रुतिमुखेनैव स्वरूपवत्स्वाभाविकत्वेन नित्यत्वमितिसिद्धम्। अत्र बहवो विप्रतिपन्नाः। तत्र चैके "नेह नाना"इति श्रुत्या स्वगतभेदनिषेधात् वस्तुतो ज्ञानमेव ब्रह्माज्ञानविजृम्भितं तत्र तद्भेदकल्पनमित्याहुः। तस्य तु पूर्वनिरस्तत्वात्। अन्ये तु सर्वगुणात्मकमेव ब्रह्म—

विजानीयात्ततो ब्रह्म सदा सर्वगुणात्मकम्।
गुणानां च विशेषोऽस्मिन्न विभेदः कथंचन॥

इतिश्रुतेः। परन्तु न गुणगुणिनोर्भेदः "एवं धर्मान्पृथक् पश्यन्"इत्यादिना तद्भेददर्शनस्य संसारहेतुत्वश्रवणात् इत्याहुः। तदसम्यक्, विकल्पासहत्वात्। तथाहि, सर्वगुणात्मकमित्यस्य को वा समासो विवक्षितः तत्पुरुषो वा बहुव्रीहिर्वा, नाद्यः षष्ठीनिर्दिष्टस्य स्वरूपभेदस्यापरिहार्य्यत्वात्। नान्त्यः गुणा एव स्वरूपं यस्येति विग्रहापत्तौ गुणा एव नान्यं ब्रह्मस्वरूपमस्तीति सिद्धान्तापत्तेः, सामानाधिकरण्यनिर्देशापत्तेश्च "यस्य ज्ञानमयं तपः" "आनन्दं ब्रह्मणो विद्वान्" इतिव्यधिकरणश्रुतिव्याकोपाच्च। किञ्च गुणाभिन्नं ब्रह्मेति पक्षे गुणानामसंख्येयत्वयोगस्य भवद्भिरपि स्वीकारात्स्वरूपस्यैव ना-

नात्वप्रसङ्गस्तथाच "एको ह वै नारायण आसीत्" इत्यादिश्रुतिबाधापत्तेश्च । किञ्च गुणाभिन्नस्वरूपाभ्युपगमे गुणा एव स्वरूपं वा स्वरूपमेव गुणा इति वा, नाद्यः, गुणाभिन्नस्वरूपाभावप्रसङ्गात् । तच्चोक्तमेव । न द्वितीयः स्वरूपस्य गुणत्वे सुनिर्गुणवादापत्तेः, गुणे गुणानङ्गीकारात् अन्यथाऽनवस्थापत्तेः । ननु पूर्वोक्तशास्त्राद्भेदाभावेऽपि विशेषस्य सत्वान्नोक्तदोषावकाश इति चेन्न किंलक्षणको विशेषः, गुणत्वेन प्रत्यायकयोग्यतारूप इति चेत्, तर्हि भेदपर्य्याय एव पृथक् प्रतीत्यर्हत्वमेव भिन्नत्वं तस्मादसमीचीन एवैष पक्षः । वस्तुतस्तु गुणगुणिनोर्भिन्नाभिन्नत्वमेव गुणानां गुण्यात्मकत्वेन तदात्मीयत्वाविशेषात् आत्मीयस्य परतन्त्रसत्तायोगेऽपि स्वतन्त्रसत्तायोगात् । तस्मात्परतन्त्रसत्ताश्रयेण लक्षणस्वरूपेण भिन्नत्वेऽपि स्वतन्त्रसत्ताभावाद्भिन्नाभिन्नत्वमिति पूर्वमेवोक्तम् ॥ १० ॥

इदानीं सर्वसेव्यत्वं भगवतो निरूपयन्स्तौति--

नित्यमुक्तजनतासुसेवितो बद्धजीवदययाऽक्षिगोचरः ॥
देशकालगुणवस्तुतो बृहन् वल्लवीप्रिय भवानमायया ॥ ११ ॥

*नित्यमुक्तजनतासुसेवित इति* । नित्याश्च मुक्ताश्च नित्यमुक्तास्तेषां जनता समुदायस्तया सुसेवितः सुतरां नैरन्तर्येण सेवित इति । तत्र नित्याः गर्भजन्मादिदुःखानुभवतत्कारणानादिप्रकृतिसम्बन्धाभाववत्त्वे सति सदा भगवत्स्वरूपगुणादिविषयकानुभवैकाश्रयाः "सदा पश्यन्ति सूरयः" इति श्रुतेः । मुक्ता नाम अनादिकर्मात्मिकाविद्यानिरूपितप्रकृतिसम्बन्धतत्कार्यजन्मादिसंसारचक्रभ्रमणरूपदुःखविमुक्तत्वे सति परमानन्दभगवद्भावापन्नाः "जहात्येनां भुक्तभोगामजोऽन्यः" "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादि श्रुतेः ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।

( भ० गी० १४अ० २ श्लो )

बहवो ज्ञानतपसा पूता मद्भावमागताः ।

"मद्भावायोपपद्यते" इत्यादिश्रीमुखोक्तेश्च । ननु नित्यादिसेव्योऽस्तु तत्प्रत्यक्षत्वान्न बद्धानां तथात्वभावः तदगोचरत्वादित्याशङ्क्य बद्धानामपि वस्तुतो गतिः स एवेत्याह *बद्धजीवदययाक्षिगोचर*

इति। बद्धाश्च ते जीवास्तेषु या दया तयेति बद्धजीवविषयकया दयया अक्षिगोचरः तेषामिति शेषः। स्वासाधारणगुणभूतया दयया बद्धानामपि तदक्षगोचरो भूत्वाऽनुगृह्णासीति वाक्यार्थः "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः।

तमेव शरणं गच्छ सर्वभावेन भारत
(१)तत्प्रसादादवाप्नोषि शाश्वतं पदमव्ययम् ॥
( भ० गी० १८ अ० ६२ श्लो )

इतिगानाच्च। बद्धाश्च अनादिकर्मवासनाजनितदेवमनुष्याद्यनेकविधदेहतत्सम्बन्धिविषयकात्मात्मीयाभिमानवन्त इति। ननु लीलावतारेषु सर्वैश्वर्यसम्पन्नतया भगवतः सर्वेषामपि आबालपर्यन्तानां प्रत्यक्षगोचरत्वात्कथं तेषां मोक्षाभाव इतिशङ्कायां दयाया विशेषमाह—*अमाययेति*। न माया यत्र सा अमाया तया मायासम्बन्धशून्यया दययेति यावत्। एतदुक्तं भवति भगवदीयदयाकारुण्यादिगुणानामाविर्भावो द्विविधः सोपाधिको निरुपाधिकश्च। तत्रार्त्यादिवारणैश्वर्यप्रदानादिनिरूपितसकामाधिकारिविषयको दयाद्याविर्भावः प्रथमः। तत्तत्कामभक्त्यादिसाधनविशेषहेतुकत्वात्। यथा द्रौपदिगजेन्द्रध्रुवप्रभृतिविषयकः स्वानन्यप्रयोजनजनोद्दिधीर्षासंकल्पप्रयुक्तनिष्कामाधिकारिविषयको द्वितीयः। भगवत्संकल्पहेतुकत्वात्। यथा प्रह्लादोद्धवादिविषयकः तथाचावतारदशायां बहूनामपि भगवद्दर्शनेऽपि मोक्षाभावोऽविरुद्धः। तैर्दृष्टेऽपि श्रीभगवति तेषां भगवदीयकृपाकटाक्षगर्भितावलोकनाविषयत्वात्।

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥
( भ० गी० ९ अ० २९ श्लो० )

इतिवचनात्। यथा कैलासयात्रायां बहुभिश्चाक्षुषविषयीकृतोऽपि भगवान् श्रीपुरुषोत्तमो न तेषां मोक्षहेतुरासीत् अपितु निरुपाधिकृपाविषयीकृतो घण्टाकर्णः सद्य एव परं श्रेयो जगाम। यथा वा यदुषु सर्वेषु सामान्यतो भगवत्समीपवर्त्तिषु सत्स्वपि केचिद्विरला एवोद्धवादयस्तद्गतिं जग्मुर्न तु सर्वेऽपि। तथाच—

---

(१) तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्। अयं पाठो गीतायाम्।

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥
(भ०गी०७अ०२५श्लो०)

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥
(भ०गी०१२अ०६-७श्लो०)

इत्यादिना तद्विवेकः स्वयमेव गीत इति ध्येयम् । नचैवं भगवति वैषम्यादिप्रसक्तिः कल्पनीया, वैषम्यहेतोः पुरुषस्वभावविशेषस्य जीवनिष्ठत्वान्न तत्र तत्प्रसङ्गगन्धसम्बन्धशङ्कावकाश इत्यलं विस्तरेण । नित्यादिसेव्यत्वे हेतुमाह-*देशकालगुणवस्तुतो बृहन्निति* । देशकालादिपरिच्छेदशून्यत्वात् स्वरुपगुणशक्त्यादिभिर्निरतिशयबृहत्वादित्यर्थः । "सत्यं ज्ञानमनन्तं ब्रह्म"इतिश्रुतेः । कृपाद्युद्दीपनकारणीभूतवात्सल्यं दर्शयन् सम्बोधयति-हे *वल्लवीप्रियेति* । वल्लव्यो नन्दगोपव्रजास्त्रियस्ताः प्रिया निरतिशयप्रीतिविषयीभूता यस्य तथा स तासां प्रियः प्रेष्ठ इति तत्पुरुषो वा तथाभूतो भवान् सर्वसेव्य इति वाक्यार्थः ॥ ११ ॥

एवं पूर्वत्र श्लोके श्रीभगवतः परमपुरुषस्य नित्यमुक्तादिसेव्यत्वनिरूपणेन निरतिशयपारम्यं प्रतिपादितम् । इदानीं तदेव गुणानुसन्धानपूर्वकमनुसन्दधन्स्तौति--

भाति चातिनिरुपाधिपद्धतिर्भक्तकामपरिपूरको विभुः ।
व्यापकोऽपि परिच्छिन्नहृद्गतोऽचिन्त्यशक्तिरवबोधवारिधेः ॥१२॥

*भातीति* भवान् श्रीपुरुषोत्तमो निरतिशयोत्कर्षेणोपनिषत्सु भातीति वर्तते चकास्तीत्यर्थः ।"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतःपृष्ठेषु सर्वतःपृष्ठेषूत्तमेष्वनुत्तमेषु लोकेष्विदं वावतद्यदिदमस्मिन्नन्तःपुरुषज्योतिः"इतिश्रुतेः । तदेवाह-*निरुपाधिपद्धतिरिति* । निर्गत उपाधिर्यतस्तथाभूता पद्धतिर्यस्य सः पत्तॄणां गन्तॄणां तत्प्राप्तिप्रतिबन्धककर्मजालं हन्ति इति पद्धतिः आनन्दवात्सल्यसौशील्यकारुण्यादिगुणानुसन्धानसन्ततिः "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इतिश्रुतेः ।

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
( भ० गी० १० अ० ११ श्लो० )

इतिभगवदुक्तेश्च । एवं तस्य सर्वोत्कृष्टत्वेऽपि वात्सल्यकारुण्यादिवशात् स्वानन्याश्रितेप्सितपूर्त्तिपरत्वमेवेत्याह—*भक्तकामपरिपूरक इति* । भक्तैः काम्यन्ते इति भक्तकामाः ज्ञानिभिर्निष्कामैः प्रह्लादादिभिरिव फलरूपापरमभक्ति र्वा जिज्ञासुभिः काम्यमाना तद्भावापत्तिर्वा । अर्थार्थिभिः काम्यमानमैश्वर्य्यादिकं वा।आर्तिभिः(आर्तैः)काम्यमानार्त्तिनिवृत्तिर्वा। अनन्यप्रपन्नैः काम्यमाना तत्प्राप्तिप्रतिबन्धकनिवृत्तिर्वा ।एतत्सर्वं तत्तदधिकारानुसारेण पूरयतीति तथोक्तः "स वा एष महानज आत्मा अन्नादो वसुदानः" "एष एवानन्दयति" "य आत्मदा बलदा" "रातेर्धातोः परायणम्" इत्यादिश्रुतेः । तत्र हेतुमाह-*विभुरिति*विभुत्वात् "सर्वस्य प्रभुमीशानम्"इतिश्रुतेः । अथ सर्वान्तरत्वेऽप्यस्पृष्टदोषत्वं दर्शयन्नाह-*परिच्छिन्नहृद्गतोऽपि व्यापक इति* ।परिच्छिन्नेषु हृत्सु गतः प्राप्तो वर्त्तमानोऽपि व्यापकः परिच्छेदशून्य एव "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य एष मे आत्मान्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकतण्डुलाद्वा एष आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इतिश्रुतेः । ननु अणीयस्त्वज्यायस्त्वयोरितरेतरविरुद्धत्वात् कथमेकत्र ब्रह्मणि तयोः समानाधिकरणत्वेनान्वय इत्याशङ्कायां समाधानत्वे हेतुमाह—*अचिन्त्यशक्तिरिति* अचिन्त्या इयत्तावच्छेदेन चिन्तयितुमनर्हा स्वाभाविकी अघटघटनापटीयसी सर्वविरोधपरिहारहेतुभूता शक्तिर्यस्य स तथोक्तः ।

"परास्य शक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रियाच"

अचिन्त्यशक्तियोगात्सर्वमनवद्यमित्यर्थः। ननु तर्हि दोषाणां समन्वयो वक्तव्यः अचिन्त्यशक्तियोगादेवेतिचेत् ? न, शास्त्रविरोधात् । अयं भावः- अचिन्त्यवस्तुनि प्रत्यक्षादिप्रमाणगोचरे शास्त्रैकमानं न तर्कादि तर्काप्रतिष्ठानात् ,

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।इत्यादिशास्त्रात्। तथाचाणीयस्त्वज्यायस्त्वादीनां शास्त्रैकप्राप्तानां व्यवस्थयैव भाव्य-

म् । अन्यथा ह्येकतरशास्त्रबाधात् अणीयवस्तुनि तदन्तरात्मतया प्रवेशात् । अणीयस्त्वं नाणुपरिमाणकत्वं सूक्ष्मार्थत्वादणुशब्दस्यातो न विरोधावहत्वं दोषागन्तुर्न तथा शास्त्रप्राप्तत्वं अपि तु निषिद्धत्वमेव अतो न तद्बन्धसम्बन्धावकाशः । "य आत्माऽपहतपाप्मा" इत्यादिश्रुतेरिति । ननु ह्रद्गतत्वाभ्युपगमे तद्गतदोषसम्बन्धस्याप्यवश्यम्भावित्वाज्जीववत्कथं निर्दोषत्वं ब्रह्मणः सम्भवतीति चेत् ? तत्राह—*अवबोधवारिधेः(धिः*) इति । अवबोधो ज्ञानं, तच्च सर्वदेशकालवस्तुविषयकं विवक्षितम् । सर्वदेशकालवस्तुविषयकसाक्षाद्रूपज्ञानत्वात् नोक्तशङ्कावकाशः । जीवस्य तु अनादिकर्मात्मिकाविद्यासँवलितत्वेन तज्ज्ञानस्यातिसङ्कुचितत्वात्तद्गतदोषभाक्त्वम् युज्यते इति भावः ।

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्न्योऽभिचाकशीति" ॥
"यः सर्वज्ञः सर्ववित्" इत्यादि विवेचकश्रुतिभ्यः ॥ १२ ॥

इत्थं श्रीभगवतः पारम्यं स्वाश्रितपूरकत्वं पूर्वश्लोकेन निरूपितम् । अथेदानीं मोक्षस्वरूपं निरूप्यते । तत्रैकविंशतिसंख्याकदुःखात्यन्ताभावो मोक्ष इति तार्किकाः । चिन्मात्रापत्तिरित्यन्ये, "चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः" इति न्यायादित्यनुवदन्नाह—

आत्मभावमनुभूतिरूपिणो ये वदन्ति तव रूपरूपिणः ॥
ब्रह्मभावपरमात्मभावतः सत्यमेव सुखबोधरूपिणः ॥ १३ ॥

*आत्मभाव*मिति । ये औडुलोम्याचार्यानुयायिनः अनुभूतिरूपिणस्तवात्मभावं चैतन्यमात्ररूपं मोक्षलक्षणं वदन्ति येचान्ये जैमिन्याचार्य्यानुगामिनः सार्वज्ञादिब्रह्मधर्मापत्तिर्मोक्ष इति वदन्ति तथा [च] सूत्रं "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इति तदप्यनुवदन्नाह—*रूपरूपिणः तव* । रूपाणामादित्यादिरूपाणां प्रकाशकानामपि रूपं प्रकाशकं तेजो विद्यतेऽस्येति यावत् । "येन सूर्यस्तपति तेजसेद्धः" इति श्रुतेः । "यदादित्यगतं तेजः" (भ. गी. १५. अ. १२ श्लो.) इत्यादिस्मृतेः । तत्र भौतिकत्वमायिकत्वादिशङ्काव्युदासाय विशिनष्टि—*सुखबोधरूपिण* इति । सुखं च बोधं च सुखबोधं तथाभूतं रूपं विद्यतेऽस्येति तथा तस्येति "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः सार्वज्ञादिकमिति वदन्ति । एवं परमतमनूद्य स्वसिद्धान्तमाह—*ब्रह्मभावपरमात्मभावत*

इति। ब्रह्मभावे सति परं केवलमात्मभाव इति मोक्षः श्रीसूत्रकाराभिप्रेतः "एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायण" इति न्यायात्। एवं च उपन्यासात्पूर्वभावात् पूर्वोक्तब्रह्मभावात् सार्वज्ञादिविषयकानुभावात् ब्रह्मभावापत्तिः; अपहतपाप्मत्वादिसंपन्नविज्ञानघनीभूतस्वस्वरूपाविर्भावाच्चाविरोधं मोक्षस्वरूपं श्रीभगवान्बादरायणो मन्यत इति सूत्रार्थः। एवं च सर्वश्रुतीनां स्वार्थे प्रामाण्यान्नैकतमयापि श्रुत्या विरोधः "निरञ्जनः परमं साम्यमुपैति स स्वराड् भवति" इति श्रुत्या सर्वज्ञासाम्यविधानात् सर्वज्ञसादृश्यस्यापि तत्र सत्त्वात् सर्वज्ञकल्पत्वमप्यविरुद्धं। "सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति श्रुतेः। सादृश्यं नाम तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। एवं "मुक्तस्य जगद्व्यापारवर्जम्" इत्यादिशास्त्रात स्वरूपंस्थित्यादीनामपहतपाप्मत्वादीनां भूयसां ब्रह्मधर्माणां योगात् परमसाम्यलक्षणसमन्वयः। स्वराड्साम्यात् स्वाराज्ययोगोऽप्यविरुद्धः। तथाचोक्तं *सिद्धान्तसेतुकायां श्रीसुन्दरभट्टपादैः*-"श्रीभगवदनवच्छिन्नानुभूत्या स्थितिर्भगवत्प्राप्तिः सैव भगवद्भावापत्तिः" ध्यानादौ परसम्मतजीवन्मुक्तौ वाऽतिप्रसङ्गवारणायानवच्छिन्नेतिविशेषणम्। ध्यानादौ कालादिविच्छेदस्य जीवन्मुक्तौ परस्वीकृतविक्षेपस्य च सत्त्वान्नातिव्याप्तिरित्यर्थः। क्षेत्रज्ञधर्मभूतज्ञानेऽतिप्रसङ्गवारणाय भगवत्पदम्। परसम्मतमोक्षेऽतिप्रसङ्गवारणाय स्थितिपदसंनिवेशः। तथोक्तं भगवता पराशरेण—

निरस्तातिशयाह्लादसुखभावैकलक्षणा।
भेषजं भगवत्प्राप्तिरैकान्तात्यन्तिकी मता॥ इति

अस्यार्थः—भगवत्प्राप्तिर्भेषजं प्रकृतिसम्बन्धात्मकरोगस्येति सम्बन्धः। तामेव विशिनष्टि- *निरस्तेति*। निरस्तोऽतिशयो यस्मात्तथाभूतेनाह्लादसुखेन भावोवस्थानमेकमसाधारणं यस्याः सा। कालादिपरिच्छेदात्मकव्यभिचारशून्यत्वं दर्शयन्नाह—*एकान्तात्यन्तिकीति*। तत्र शास्त्रसम्मतिमाह-*मतेति*। "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इतिश्रुतेः। ननु स्वस्वरूपापत्तिरेव मोक्षोन भगवद्भावापत्तिकल्पना युक्ता गौरवात्। "स्वेन रूपेणाभिनिष्पद्यते" इति श्रुत्या तथैवाभिधानात्। "परं ज्योतिरुपसम्पद्य" इति

ब्रह्मभावस्य तत्साधनत्वेनोक्तेश्चेति चेत्? न, तथात्वेऽपि विरोधाभावात्। तथाचास्याः श्रुतेरयमर्थः—एष इति शमदमादिदैवीसम्पत्सम्पन्नश्चरमजन्मा मुमुक्षुः अतएव सम्प्रसादः सम्यक् प्रसादो भ(ग) वदनुग्रहो यस्मिन्सः भगवदीयपरिपूर्णानुग्रहभाजनमिति यावत्, मोक्षलब्धृत्वात्। "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः।

मत्प्रसादादवाप्नोषि शाश्वतं पदमव्ययम्।

(भ० गी० १८ अ० ५६ श्लो०)

इति भगवदुक्तेश्च। अस्माच्छरीरात्समुत्थायेति—

कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।

(भ० गी० १३ अ० २१ श्लो०)

इत्यादिशास्त्रोक्तमहंकारममकारकारणं मोक्षप्रतिबन्धकं कार्यकारणाद्यात्मकं प्रकृतिसम्बन्धं विहायेत्यर्थः। परं ज्योतिरूपसम्पद्यति। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" "आदित्यवर्णं तमसः परस्तात्" "यदापश्यः पश्यते रुक्मवर्णम्" इत्यादिश्रुत्युक्तपरब्रह्माभिन्नज्योतिःशब्दाभिधेयश्रीपुरुषोत्तमरूपं साक्षादनुभूयेतियावत्। स्वेन रूपेणाभिनिष्पद्यत इति। पूर्वानुभूतज्योतिःशब्दाभिधेयसर्वज्ञानशक्तिबलैश्वर्यादिसम्पन्नविश्वात्मजगन्नियन्तृश्रीवासुदेवविषयकाखण्डानवच्छिन्नानुभवानुभवितृरूपेणावतिष्ठते इत्यर्थः। ननु प्रत्यग्ब्रह्माभेद एव मोक्षः स एव सायुज्यशब्दाभिधेयः "ब्रह्म वेद ब्रह्मैव भवति" इतिश्रुतेः। अवधारणञ्च गुणादिस्वगतभेदमपि निराकरोतीति चेत्? न, भेदज्ञानादेव मोक्ष इति श्रवणबाहुल्यान्मोक्षेऽपि भेदस्यावश्यम्भावित्वात्।

"जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः।
पृथगात्मानं प्रेरतारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति॥(?)
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥

(भ० गी० ५ अ० २९ श्लो०)

इत्यादिश्रुतिस्मृतिभ्यः। नाप्यवधारणश्रुतिविरोधः, तस्यायोगव्यवच्छेदार्थकत्वेन बृहद्गुणकत्वान्नैराकाङ्क्षं बोध्यम्। बृहद्गुणकत्वेन जीवेऽपि ब्रह्मत्वयोगाभ्युपगमात् सामञ्जस्यमेव। अन्यथा "ब्रह्मविदाप्नोति परम्" इति कर्मकर्तृव्यपदेशव्याकोपस्यापि साम्यात्

तदात्मकत्वादिभिश्चापि ब्रह्मत्वोक्तेरविरोधश्च पूर्वमेव वाक्यार्थनि- र्णये प्रतिपादितत्वात्। सायुज्यपदस्याभिन्नार्थत्वाङ्गीकारे तु "एतासां देवतानां सायुज्यसार्ष्टिसलोकतामाप्नोति" इति श्रुत्या विरोधापत्तेः। नह्येकस्योपासकस्य युगपत्क्रमेण वा अनेकैर्दैवैरैक्यात्मकसायुज्यसम्भ- वः,एकेनैक्यापत्तौ पुनरन्यैरैक्यापत्तेः कथमप्यनुपपन्नत्वात्। अलं पल्ल- वनेन विस्तारश्च सिद्धान्तजाह्नव्यां द्रष्टव्यः। अयं भावः–यद्यपि आत्म- भावापत्तिलक्षणमोक्षवादिनां ब्रह्मभावापत्तिलक्षणमोक्षवादिनां चाभ्यु- पगमोऽपि श्रुत्येकदेशत्वाच्छ्रौत–एवेति। *सत्यमेवेति*। अर्द्धाङ्गी- कारे, तथापि अन्योन्यश्रुतिविरोधस्तु तेषामपरिहार्य्य एव। सिद्धा- न्ते तु सर्वश्रुत्यविरोधान्न कस्यापि वाक्यस्य बाध इति वरीयस्त्वमु- क्तलक्षणमोक्षस्येति ध्येयं मुमुक्षुभिरिति। एके तु मोक्षेऽपि तारत- म्यं भावयन्ति ते तु विद्वद्भिरुपेक्षणीया एव तारतम्यं चेदनित्यत्व- मपि अवश्यम्भावि पराभिमतो मोक्षोऽनित्यः तारतम्यवत्त्वात् यदे- वं तदेवं स्वर्गादि [वदि] त्यनुमानात्। "परमं साम्य मुपैति" इति श्रु- तिविरोधाच्च, अश्रौतत्वाच्चेति सङ्क्षेपः॥ १३॥

अथ सर्वस्यापि वेदस्य भगवत्येव समन्वयं वर्णयन्स्तौति––

त्वामखण्डरसमात्मनत्लभं वेदवाक्यमत एव बोधयत्।
पर्य्यवस्यति परेऽखिलात्मनि त्वय्यनन्त सुखरूप शोधयत्॥१४॥

*त्वामिति*। वेदवाक्यं त्वय्येव पर्य्यवस्यतीत्यन्वयः।वेदानां वाक्यं वाक्यजातं जात्यभिप्रायेणैकवचनप्रयोगोऽविरुद्धः। *त्वयीति*। सर्व- ज्ञाचिन्त्यानन्तशक्तौ स्वभावतोऽपास्तसमस्तदोषेऽशेषकल्याणगुणै- कमहार्णवे श्रीपुरुषोत्तमे परब्रह्मणि वासुदेवे समन्वेतीत्यर्थः। "सर्वे वेदा यत्पदमामनन्ति" "नामानि सर्वाणि यमाविशन्ति" "तं त्वौप- निषदं पुरुषं पृच्छामः" इत्यादिश्रुतिभ्यः। "वेदैश्च सर्वैरहमेव वेद्यः" (भ० गी० १५ अं० १५ श्लो०)

"वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥
नमाम सर्ववचसां प्रतिष्ठा यत्र शाश्वती"

इत्यादिस्मृतिभ्यः "तत्तु समन्वयात्" इति न्यायाच्च। ननु "हिरण्यगर्भः समवर्त्तताग्रे विरञ्चो वा जगद्विरेचयति विदधातीति-

ब्रह्मा वा वविरञ्चः'' "एको रुद्रो न द्वितीयाय तस्थुः" "इन्द्रो मायाभिः पुरुरूप ईयते" "वायुर्वै क्षेपिष्ठा देवता" "अग्निर्मूर्द्धा दिवः" इत्यादिभिर्वेदस्य विश्वतोमुखत्वदर्शनात्कथं मय्येव समन्वयनियम इत्याशङ्कायामाह—*अखिलात्मनीति* । अखिलस्य ब्रह्मरुद्रेन्द्रादिचेतनवर्गस्य महदादिशरीरान्ताचेतनवर्गस्य चात्मनि अन्तरात्मनि नियन्तरि च । "एष सर्वभूतान्तरात्मा दिव्यो देव एको नारायणः सर्वव्यापी सर्वभूतान्तरात्मा" इति श्रुतेः । चेतनाचेतनस्याखिलस्य जगतस्त्वदात्मीयत्वात् । आत्मीयप्रतिपादनस्यात्मन्येव पर्यवसाननियमात् त्वय्येव पर्य्यवसानमशेषस्यापि वेदस्येत्यर्थः । ब्रह्मरुद्रेन्द्रादिशब्दानामपि तत्तव्यक्त्यवच्छिन्नप्रत्यगात्मपरत्वेऽपि मुख्यवृत्त्यैव तेषामप्यात्मभूतस्य तवैव वाचकत्वमिति यावत् । तच्च पूर्वमेव प्रतिपादितम् । ननु "अम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्यादिशास्त्राद्वेदस्य कृत्स्नस्यापि क्रियापरत्वावगमात्कथं ब्रह्मण्येव समन्वय इति कर्ममीमांसकानां स्वोत्प्रेक्षितां शङ्कां निराकुर्वन्नाह—*अत एवेति* । अखिलात्मत्वादेव । तत्रापि हेतुमाह—*परे* इति । क्षराक्षराभ्यामुत्कृष्टे श्रीपुरुषोत्तमे "प्रधानक्षेत्रज्ञपतिः" इति श्रुतेः ।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

(भ० गी० १५ अ० १८ श्लो०)

इतिभगवदुक्तेश्च कारयितरि तत्फलदातरि चेति । नहि जडात्मकस्य क्षणस्थायिनो विनाशिनश्च कर्मणः फलदानादौ स्वातन्त्र्यं घटते न च कर्मणः क्षणिकत्वेऽपि तज्जन्यादृष्टलक्षणसंस्कारस्य यावत्फलसिद्धिमवस्थानाभ्युपगमान्नोक्तदोषावकाश इति वाच्यम्, अदृष्टकल्पनायां प्रमाणाभावात् । नचान्यथानुपपत्तेरेवात्र मानत्वमिति वाच्यम्, श्रुतिनिर्मूलकस्यास्तस्यास्तथात्वायोगात् । नच कर्माभावे जगद्वैचित्र्यासिद्धिप्रसङ्गः अन्यथा ब्रह्मणि वैषम्यनैर्घृण्याद्यापत्तेः तस्मात्तत्परिहारार्थं तस्य कर्मसापेक्षत्वमकामेनापि त्वया स्वीकृतत्वात्, "वैषम्यनैर्घृण्येन सापेक्षत्वात्" इतिन्यायादिति । तथाच कर्मण एव कार्यसिद्धिरभ्युपगन्तव्या किमीश्वरेण तत्सापेक्षेणेति वाच्यम्, अघटनात् । तथाहि न तावत्कर्माणि स्वरूपतो वयं निषेधयामो येनोक्तप्रसङ्गः किन्तु कर्मणः स्वातन्त्र्यमेव तच्च शास्त्रसिद्धमेव "एष एव साधु

कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" इत्यादिश्रुतिभ्यः।"फलमत उपपत्तेः" इतिन्यायाच्च। अन्यथा जडस्यापि स्वातन्त्र्ययोगे घटादावपि तथात्वप्रसङ्गात्, जडत्वाविशेषात् [ वि ] निगमनाविरहाच्च। अतो यत्प्रेरितः स क्षेत्रज्ञः कर्म करोति स एव स्वातन्त्र्याश्रयः पुरुषोत्तमः सर्ववेदस्य विषयो भवितुमर्हति न कर्म, परजन्यत्वात् परतन्त्रसिद्धत्वात् क्षणिकत्वाच्च कर्मणः। तत्सिद्धं श्रीवासुदेवे एव वेदस्य समन्वयः तस्य सर्वात्मत्वादेव। तथाच कर्मणोऽपि तदात्मकत्वाविशेषात्तत्प्रतिपादकवाक्यानामपि साक्षात्परम्परया वा तत्रैव समन्वयः तत्रोपासनावाक्यानां तत्प्राप्त्युपायविधानद्वारेण कर्मवाक्यानां विविदिषाद्वारेण लक्षणावाक्यानां च साक्षात्स्वरूपप्रतिपादनेन केषांचिद्गुणशक्त्यादिपरत्वेन समन्वय इति भावः। किं कुर्वन्नित्यपेक्षायां तत्प्रकारं दर्शयन्नाह—*त्वामिति*। अखण्डरसं त्वां बोधयन् हेयसम्बन्धनिषेधेन शोधयंश्चेति यावत्। अखण्डश्चासौ रसश्च तथोक्तस्तम्। अखण्डानन्दस्वरूपं "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "आनन्देन जातानि जीवन्ति" "आनन्दं प्रत्यभि संविशंति" "रसो वै सः" "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" "एष आनन्दयाति" "विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिभ्यः। यद्वा अखण्डो रसः अखण्डो गुणो यस्य सोऽखण्डरसस्तम् अखण्डानन्दगुणाश्रयमिति "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इतिश्रुतेः। उपलक्षणमेतच्चान्येषां गुणानां ज्ञानादीनाम्। अथ कारुण्यवात्सल्यादिगुणानुपलक्षयन्विशिनष्टि *आत्मवल्लभमिति* । आत्मानः स्वानन्याश्रिता जीवा वल्लभाः प्रिया यस्य तथोक्तस्तं "ज्ञानी त्वात्मैव मे मतम्" (भ. गी. ७ अ. १८ श्लो.) इति भगवदुक्तेः। अत्रात्मशब्दस्य सामान्यजीवमात्रपरत्वेऽपि तदाश्रितेष्वेव सङ्कोचो बोध्यः। यद्वा, पूर्वोक्तबहुव्रीहिसमास एवासंकोचेन विवक्षितः आत्मानो जीवात्मानो वल्लभा यस्य तं सर्वजीवनिकायविषयकप्रीतिमन्तं सर्वान्तर्य्यामित्वेन नरकस्वर्गगर्भजननमरणादिविपत्संपदादिसर्वावस्थासु यस्याविनाभावेन सर्वजीवपितृवत्त्वात् सुहृत्त्वाच्च। "एष ते आत्मान्तर्य्याम्यमृतः" "द्वा सुपर्णा

सयुजा सखाय।" "सर्वस्य शरणं सुहृत्" इत्यादिश्रुतिभ्यः। यद्वा आत्मनां सर्वेषामपि वल्लभस्तथोक्तस्तं सर्वात्मत्वात् आत्मनामेव निरतिशयनिरुपाधिकप्रेमास्पदत्वात्। तथाचाम्नायते *बृहदारण्ये* "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायाः कामाय० न वा अरे पुत्राणां कामाय० न वा अरे वित्तस्य कामाय वित्तम्० न वा अरे पशूनां कामाय पशवः० न वा अरे देवानां कामाय० न वा अरे वेदानां कामाय० न वा अरे भूतानां कामाय० न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुतिभिः आत्मीयवृत्तेरात्मन्येव पर्यवसानादित्यर्थः। एवमानन्दादिवात्सल्यकारुण्यादिसद्गुणगणार्णवत्वेन त्वां (१)बोधयत् "स्वाभाविकी ज्ञानबलक्रियाच" इति श्रुतेः "य आत्मापहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः अन्यत्र धर्मादन्यत्रास्मात्कृतात् अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" इत्यादिहेयसम्बन्धवर्जितत्वेन च शोधयन् वैलक्षण्यतया वर्णयँस्त्वय्येव पर्यवस्यतीति सम्बन्धः। उक्ततात्पर्यद्योतनाय संबोधयति पदद्वयेन-* हेअनन्त * त्रिविधपरिच्छेदशून्य *हेसुखरूप* आनन्दमूर्त्ते। यद्वा, एकमेव पदं हे अनन्तसुखरूप अपरिच्छिन्नानन्दलक्षणं रूपं यस्येति तथा सच्चिदानन्दरूप "यदा पश्यः पश्यते रुक्मवर्णम्" "आदित्यवर्णं तमसः परस्तात्" "आप्रणखात्सुवर्णः" इत्यादिश्रुतिभ्यः॥ १४॥

एवं प्राकृतहेयसम्बन्धगन्धाघ्रातमाहात्म्यकत्वेनाशेषकल्याणगुणाद्यर्णवत्वेन च श्रीभगवन्तं वेदाः प्रतिपादयन्तस्तत्रैव समन्वयन्तीत्युक्तम्। अथोक्तलक्षणस्यैवोपासनाय मोक्षासाधारणहेतुत्वं वक्तुकामोऽन्यदेवोपासनस्य संसारहेतुत्वात्तन्निष्ठावतां निन्दयन्नाह शास्त्रप्रमाणमुखेन—

वेदविद्भिरभिधीयते पशुर्योऽन्यदेवसमुपासको हि सः।
त्वामुपास्य बहवोऽमृता हताः पूर्णकाममम‍ृतं निरंहसः॥ १५॥

*वेदविद्भिरिति*। योऽन्यदेवसमुपासकः स वेदविद्भिः पशुर-

(१) वेद इत्यर्थः। तेन पुंस्त्वनिर्देशसङ्गतिः।

भिधीयते इत्यन्वयः। तत्र यइति सामान्यप्रयोगो वर्णादिनियमव्यावृत्त्यर्थो बोध्यः योऽपि कोऽपि वा अन्येषां श्रीवासुदेवेतरेषां ब्रह्मरुद्रेन्द्रादिदेवविशेषाणां समुपासकः सम्यक् वन्दनार्चननमनस्तवनतन्मन्त्रजपादिपरायणः स पशुः परदेवविषयकतत्त्वज्ञानशून्योऽभिधीयते निरूप्यते "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मि न स वेद यथा पशुः यो वै स्वां देवतामतियजति परस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ" इत्यादिश्रुतिभ्यः।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याऽऽराधनमीहते।
लभते च ततः कामान्मयैव विहितान्हितान्॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि॥

(भ० गी० ७ अ० २१, २२, २३ श्लो०)

इति श्रीमुखगानाच्च *विष्णुपुराणे च-

तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः।
कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा (वि० पु०)

इति श्रीभगवतो वासुदेवस्य ध्यानविषयत्वं विधाय—

येऽन्ये च पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥

इति जनको जनकं प्रत्याह-अस्यार्थः—यः पुमान् श्रीभगवतः सर्वेश्वराच्छास्त्रयोनेर्विश्वजन्मादिहेतोर्मोक्षदातुः स्वतन्त्रसत्ताधारात् मायानियन्तुर्बुद्धिप्रेरकात् ब्रह्मरुद्राद्युपदेष्टुः पुरुषोत्तमात् अन्यां ब्रह्मरुद्रेन्द्रादिरूपां देवताम् उपासते अर्चनस्तवनजपादिना विषयीकरोति। कथमित्यपेक्षायामुपासनप्रकारमाह—असौ ब्रह्मरुद्रेन्द्रादिदेवताविशेषोऽन्यः परमेश्वरः अहमन्यो जीवविशेष उपभासक इति निष्ठया स न वेद तत्त्वतो न जानाति तेषां भगवदाराधनजन्यतत्प्रसादलब्धपरिच्छिन्नैश्वर्य्यवत्त्वेऽपि सर्वेश्वरत्वशास्त्रयोनित्वजगत्कारणत्वमायानियन्तृत्वसमष्टिबुद्धिप्रेरकत्वमोक्षदातृत्वादियोगाभावेन निरतिशयैश्वर्य्याभावेन च प्रत्युत परजन्यकर्मतन्त्र-

परोपदेश्यत्वादियोगेन च जीवत्वाविशेषात्।

अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः।

इति पूर्वोक्तवचनात्। तत्र दृष्टान्तः—यथा पशुरिति। ज्ञानहीनत्वात् "ज्ञानेन हीनाः पशुभिः समानाः" इति वचनात्। इति यः स्वां देवतां स्वेनार्चनीयां विश्वान्तरात्मभूतां श्रीवासुदेवाख्याम् अतियजति परस्वायै देवतायै ब्रह्मरुद्रेन्द्रादिरूपायै भगवन्तमतिक्रम्य निरीश्वरं परिच्छिन्नैश्वर्यविशिष्टं जीवविशेषं यजते स पापीयान् स्वधर्मत्यागपरधर्माचाराभ्यां पापयोगात् पतिदेवताया युवत्या इतरपुरुषदर्शनादिवत् दुःसहापराधयोगाच्च। उक्तापराधस्य फलमाह— *च्यवते न परां प्राप्नोतीति*। स्वधर्मादनन्यभागवतधर्माद्धीयते न परां श्रीपुरुषोत्तमाख्यां परदेवतां न प्राप्नोतीत्यर्थः।

मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्।

(भ० गी० १६ अ० २१ श्लो०)

इतिभगवदुक्तेः। अन्यदप्यन्वयव्यतिरेकिवाक्यमाह—तमेवैकमिति। तच्छब्दो वेदान्तप्रसिद्धब्रह्मात्मसदादिशब्दाभिधेयं परब्रह्मभूतं भगवन्तमभिदधाति एवैकशब्दौ साम्यातिशयव्यवच्छेदपरौ अन्या अन्यदेवतादिविषयाः वाच इति यद्यन्यदेवविषयवाचोऽपि हेयास्तर्हि अन्योपासनादिकं हेयमिति किमुत वक्तव्यमिति कैमुत्यन्यायपरोऽयं वाक्शब्दः। तद्भवत्यल्पमेधसामिति। अल्पमेधःशब्दोऽपि पशुशब्दवज्ज्ञानहीनत्वाभिधायकः। स्पष्टमन्यत्। किञ्च—

आलिङ्गनं वरं मन्ये व्यालव्याघ्रजलौकसाम्।
न सङ्गः शल्ययुक्तानां नानादेवोपसेविनाम्॥

इत्यादिवचनादन्यदेवोपासकानां सङ्गोऽपि महान्निषिद्धोऽनर्थहेतुत्वात् किं पुनस्तदुपासनमित्यलं विस्तरेण। तस्मादन्यदेवोपासकः पशुरेवेति शास्त्रमुखेन सिद्धम्। ननु तर्हि परब्रह्मोपासनस्यापि दुष्टत्वमेव "नेदं यदिदमुपासते" इत्यादिश्रुत्या तस्योपास्यत्वनिषेधादिति चेत्? तत्राह—*त्वामुपास्येति। त्वां सर्वज्ञं सर्वशक्तिमचिन्त्यानन्तासंख्येयसद्गुणसागरं जगदुपादानाभिन्ननिमित्तकारणं शास्त्रयोनिं मोक्षदातारं मुक्तोपसृप्यं ब्रह्मरुद्रेन्द्रादिवन्दितपादपीठं भगवन्तं श्रीवासुदेवं प्रकृतिकर्मादिनियन्तारम् उपास्य उपासनाविषयीकृत्य त्वत्प्रसादलब्धसाक्षात्कारेण बहवोऽमृताः अमृतत्वमाप्ता मोक्षंगता-

स्तवद्भावापन्ना इत्यर्थः । "तमेवं विद्वानमृत इह भवति" "ब्रह्म-विदाप्नोति परम्" "यदा पश्यः पश्यते रुक्मवर्णं" "कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्" "तदा विद्वान्पुण्यपापे विधूय" "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतेः ।

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥
(भ० गी० १४ अ० २ श्लो०)

बहवो ज्ञानतपसा पूता मद्भावमागताः ।
(भ०गी० ४ अ० १० श्लो०)

इत्यादिभगवदुक्तेश्च । मुक्तान्विशिनष्टि-*निरंहस*इति । निःशेषेण नष्टानि अंहांसि येषां ते अत्रांहसो न केवलं पापवाचकः अपि तु पुण्यस्यापि सङ्ग्रहार्थः, तस्यापि संसरणहेतुत्वाविशेषात् । "सर्वे पाप्मानः प्रदूयन्ते एवंविदि पापं कर्म न श्लिष्यते" "एष आत्माप-हतपाप्मा सर्वेभ्यः पाप्मभ्य उदित अश्व इव रोमाणि विधूय पापम्" इत्यादिश्रुतिषु पुण्यपापयोरुभयोरपि पापशब्देनैव सङ्ग्रहदर्शनात् । अथोपास्यं विशिनष्टि—*पूर्णकाममम‍ृतमिति* । पूर्णकामं पूर्णाः कामा यस्य तम् अवाप्तसमस्तकाममित्यर्थः । "पूर्णमदः पूर्णमिदं पूर्णमेवावशिष्यते" इति मन्त्रवर्णात् ।अमृतम् आनन्दस्वरूपम् आनन्दकरं चेति "विज्ञानमानन्दं ब्रह्म" "एष आनन्दयति" "एतस्यैवानन्दस्य सर्वाणि भूतानि मात्रामुपजीवन्ति" इत्यादिश्रुतेः । छान्दोग्याम्नातभूमविद्याविषयमितियावत् । "यो भूमा तदेव सुखं भूमैव सुखं भूमात्वेव विजिज्ञासितव्यः यो वै भूमा तदमृतम्" इत्यादिश्रुतेः । "भूमां वरां धृतः" इत्यादि न्यायात् । तस्मान्मुमुक्षुभिः श्रेय उपलब्धये श्रीपुरुषोत्तमो भगवानेवोपासनीय इति तात्पर्य्यार्थः । "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "आत्मानमेवं लोकमुपासीत" "भूमात्वेव विजिज्ञासितव्यो भूमात्वेव विजिज्ञासितव्यः" "लोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इत्यादिश्रुतिभ्यः । ननु त्वामुपास्य बहवोऽमृता वृता इति फलमात्रकथनात् स्तुतिपरमेवेदं वाक्यं न विधानपरं विधिप्रत्ययादर्शनादिति चेत्? न, फलपरस्यापि विधिरूपत्वस्य कर्ममीमांसकैः स्वीकृतत्वात् तथाहि "सर्वं पापं तरति ब्रह्महत्यां योऽश्वमेधेन यजति" इत्यत्र तथा

प्रकृतेऽपि । एतदुक्तं भवति "नेदं यदिदमुपासते" इति श्रुत्योपासना निषिद्धेति सत्यं, तथापि तस्याः प्रतीकोपासनविषयत्वात् तन्निषेधो युक्त एव । न तु परब्रह्मवासुदेवोपासने तस्य प्रसरणावकाशः शास्त्रसिद्धत्वात् , आरोप्यस्यैव निषेधविषयत्वं न प्रमाणसिद्धवस्तुन इति न्यायस्य सर्वसङ्गतत्वात् , यथाऽन्यत्र नद्यादिजले गङ्गात्वमारोप्य पुनर्नेदं गाङ्गमितिनिषेधस्य सम्भवान्न साक्षाद्विष्णुपादोदकायां भागीरथ्यां तस्यावकाशः प्रमाणसिद्धत्वात् , यथा वा पञ्चाग्निविद्यायां "पुरुषो वा व गौतमाग्निः" इत्यादिनोपासनार्थं पुरुषादिष्वग्नित्वमारोपितं रूपकेण तन्निषेधश्चेद्युक्तमेव न तु प्रत्यक्षादिप्रमाणविषये आहवनीयादौ तत्प्रसरणावकाशः प्रमाणसिद्धत्वादेव, तथा प्रस्तुतेऽपि अतद्वति "मनो ब्रह्मेत्युपासीत" इत्यादिश्रुत्योक्ते मनोवागादौ ब्रह्मत्वदर्शनं "नेदं यदिदमुपासते" इति श्रुतेस्तन्निषेधपरमेव आरोपितत्वात्न तु सर्वेश्वरे सर्वशास्त्रवेद्ये ब्रह्मणि श्रीवासुदेवे तत्स्पर्शावकाशलेशः । एतच्च नेदं ब्रह्मेतीदङ्कारेणैव द्योत्यमानत्वान्न श्रुतत्यागाश्रुतकल्पनावतरणावसरः इदङ्कारास्पदप्रपञ्चात्यन्तवैलक्षण्याश्रयं ब्रह्मेत्यर्थः । नेदङ्कारास्पदान्तःपातिवस्तुविषयकोपासनं बालं विना कैश्चिदभ्युपगम्यते इत्यर्थः । एतेनैवान्यदेवोपासनस्यापि प्रपञ्चान्तःपातित्वेन संसृतिहेतुत्वाविशेषात् मोक्षाहेतुत्वाच्च अतिशयेन हेयत्वं बोधितम् । संसरणहेतुत्वे च "अन्तवत्तु फलं तेषां" ( भ० गी० ) इत्यादिमानस्य पूर्वमेवोदाहृतत्वात् । मोक्षाहेतुत्वे च *हरिवंशे* घण्टाकर्णानुभव एव प्रमाणम् ।

अहं कैलासनिलयमासाद्य वृषभध्वजम् ।
आराध्य तं महादेवमस्तुवं सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ॥
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ॥
तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ॥

इत्यादि । तस्मात्संसृतिहेतुभूतान्यदेवोपासनं परिच्छिन्नफलकप्रतीकोपासनं च हित्वा श्रीपुरुषोत्तमवासुदेवनारायणादिशब्दा-

भिधेयो जगज्जन्मादिनिमित्ताभिन्नोपादानकारणशास्त्रयोनिमु-क्तोपसृप्यपरमयोगिध्येयपदाम्बुजकुतर्कात्यन्तागोचरमाहात्म्यदिक्क-टभूमा परब्रह्म श्रीमुकुन्दो रमाकान्तो मुमुक्षुभिः परब्रह्मभावलक्ष-णनिःश्रेयोऽर्थिभिः सततमुपासनीय इति वाक्यसङ्ग्रहार्थः ॥ १५ ॥

पूर्वत्र श्लोके श्रीवासुदेवेतरदेवोपासकानां पशुवदज्ञानवत्त्ववर्ण-नपूर्वकं परमपुरुषोपासनं शास्त्रमुखेन कर्त्तव्यतया निर्णीतम् । इदा-नीं तत्सन्ततिविमुखानां स्वबुद्ध्युत्प्रेक्षिततर्कैनिष्ठानामिष्टाप्राप्तिं प्रद-र्शयन् तद्युक्तीरनूद्य निरासायोपक्रमते--

नेष्टसिद्धिरपि च व्यवस्थयाऽनादृतेशचरणा यतो हरे ! ॥
युक्तिरेव शिथिला हि तन्मते सत्त्वयाऽपि नहि मानदो विभुः॥ १६॥

*नेष्टसिद्धिरिति* । हे हरे आत्माश्रितपापानि हरतीति हरि-स्तत्सम्बोधनं हे हरे इति ।

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ।
अनिच्छयापि संस्पृष्टो दहत्येव हि पावकः ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥
( भ० गी० १० अ० ११ श्लो० )

इति स्मृतेः । व्यवस्थयापि साधनप्रक्रियया श्रवणमननादिरूप-याऽपि तेषामिष्टसिद्धिः श्रेयोलक्षणा न स्यात् अप्यवधारणार्थः । नैव स्यादित्यर्थः । चकारो भोगसिद्धिनिषेधसमुच्चयार्थः भोगसि-द्धिरपि नैवेति यावत् । तत्र हेतुमाह-*यतोऽनादृतेशचरणा इति* । यतो यस्मात् न आदृतम् ईशाचरणं यैस्ते तथा भगवदनुग्रहासा-धारणहेतुभूतभक्तिशून्यत्वात् । अनुग्रहासहकृतसाधनजातस्याप्र-योजकत्वेनाकिञ्चित्करत्वात् ।

शृण्वन्तोऽपि बहवो यं न विदुः ।
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् ॥
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥

इति अन्वयव्यतिरेकश्रुतिभ्यः । अथ तन्मते युक्तिरपि विरुद्धैव शास्त्रशून्यत्वादित्याह--*युक्तिरेव शिथिला हि तन्मते इति* । त-न्मते युक्तिः शिथिलैवेत्यन्वयः । तेषां मिथ्येश्वरवादिनाम् । अनादृ-

तेशचरणानां केवलवैदिकाभिमानिनां मते स्वोत्प्रेक्षिता शब्दविवर्त्तवादमते युक्तिः शास्त्रप्रतिकूलतर्करूपा शिथिलैव मंदैव श्रुतिमूलकस्वाभावात्।

तथाहि, इत्थं तेषां सिद्धान्तप्रक्रिया। एकाद्वितीयाप्रमेयनिर्विशेषमात्रं ज्ञानं अनादिकल्पिताज्ञानाध्यासवशादनेकधा विवर्त्तते। तत्र सर्वजगदुपादानभूताज्ञानविवर्त्ताधिष्ठानं कारणं तदुपहितं वा मायावच्छिन्नं चेश्वरशब्दाभिधेयम्। अविद्यावच्छिन्नमन्तःकरणावच्छिन्नं वा अविद्याप्रतिबिम्बितं बुद्धिप्रतिबिम्बितं वा ज्ञानं जीवशब्दाभिधेयम्। तच्चानाद्यविद्याध्यासात् तत्तच्छरीरेन्द्रियबुद्ध्यादिगतकर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिधर्मानात्मधर्मत्वेनाभिमन्यमानो देवतिर्यङ्मनुष्यादिनामरूपैः स्वानादिकर्मवशेन स्वर्गनरकादिसंसारचक्रमनुभवन्संसरति। तत्र कश्चित्सुकृतपुण्यपुञ्जैः शुभवासनादिसंस्कृतः संसारदुःखानुभवेन विरज्यमानो मुमुक्षुः साधनचतुष्टयसम्पन्नोऽधिकारी शास्त्रोक्तलक्षणं गुरुमुपसृत्य वेदान्तश्रवणादिजन्याखण्डप्रत्यग्ब्रह्मैक्यज्ञानात् सकार्यमज्ञानं नाशयित्वा ब्रह्मरूपेणावतिष्ठते।

तदसमीचीनम्। अवैदिकत्वेन स्वप्राङ्गणेऽश्वधावनमात्रत्वात्। तथाच नतावत्तदभिमतनिर्विशेषज्ञानसिद्धिः "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" "स्वाभाविकी ज्ञानबलक्रियाच" इति विवक्षितगुणोपपत्तेश्च, सर्वधर्मोपपत्तेश्च, "सर्वोपेता च सा" इति श्रुतिसूत्रेभ्यस्तद्विपरीत्यस्यासुवचत्वात्। न च निषेधरूपत्वान्निर्गुणवाक्यानामेव प्राबल्यमिति वाच्यम, "असद्वा इदमग्र आसीत्" इति वाक्यस्य "सदेव सौम्येदमग्र आसीत्" "आत्मा वा इदमग्र आसीत्" "एको ह वै नारायण आसीत्" इत्यादिवाक्येभ्यः प्राबल्यापत्तेः। न च निर्गुणवाक्यस्य मोक्षहेतुत्वात् "फलवत् सन्निधौ" इति न्यायेन सगुणवाक्यस्यैव तदनुगुणत्वेनैव नेयमिति वाच्यम।

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥
"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥

(भ० गी० ५ अ० २९ श्लो०)

इत्यादिश्रुतिस्मृतिभिः सविशेषविषयकज्ञानस्यैव मोक्षहेतुत्वाभिधानात्। नचैवं निर्गुणश्रुतिबाधप्रसङ्गो दोषः शङ्कनीयः, तासां सत्त्वादिप्राकृतगुणनिषेधपरत्वेन सावकाशत्वात्। न च "साक्षी चेताः केवलो निर्गुणश्च" इत्यादिश्रुतेः सामान्यगुणनिषेधपरायाः सत्त्वादिविशेषे सङ्कोचेऽन्याय्यत्वाद्धर्ममात्रनिषेध एव स्वीकार्यमिति वाच्यम्। सामान्यशास्त्रस्य विशेषेण सङ्कोचे मानसिद्धे उक्तशङ्काया एवान्याय्यत्वात्। तथाहि "न हिंस्यात्सर्वाभूतानि" इति सामान्यहिंसानिषेधशास्त्रस्य "अग्नीषोमीयं पशुमालभेत" इति विशेषशास्त्रेण सङ्कोचदर्शनात्। किञ्च "पशुना यजेत" इति सामान्यस्य विधेः "छागेन यजेत"इति विशेषशास्त्रेण सङ्कोचादुक्तसिद्धान्त एव साधीयान्। इतरथा धर्ममात्रनिषेधपरत्वाभ्युपगमे "साक्षी चेताः"इत्यत्रैव "साक्षात् द्रष्टरि संज्ञायाम" (पा.सू.५-२-९१) इत्यादिमानाद् द्रष्टृत्वं चैतन्यादीनामपि निषेधे 'मे माता वन्ध्या' इतिवद्वाक्यमूकप्रसङ्गात्। नचैवं "धर्मान्पृथक् पश्यन्" इत्यादिश्रुत्या गुणदर्शनस्यानर्थहेतुत्वविधानाद्धेयत्वमेवेति वाच्यम्, सविशेषणेहीतिन्यायेन गुणसम्बन्धिस्वतन्त्रसत्तावत्त्वस्यैव निषेधात् शिखी विनष्टः पुरुषो न नष्टः 'स्वर्गी ध्वस्तः, पुरुषो न नष्टः' इत्यादिवत् गुणवृत्तिस्वातन्त्र्यदर्शनस्यैवानर्थहेतुत्वं न गुणस्वरूपस्येति यावत्। अन्यथा "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इतिमोक्षफलकगुणदर्शनविरोधात्। न च राहोः शिर इतिवत्तस्यापि स्वरूपपरत्वमेवेति वाच्यम्, मुख्यार्थत्यागस्यान्याय्यत्वात्। किञ्च "स्वाभाविकी ज्ञानबलक्रियाच" इतिपरमादरेण ब्रह्मगुणान्प्रतिपाद्य भूयस्तन्निषेधप्रवृत्तासु श्रुतिषु औन्मत्तप्रलापवत् आप्तत्वहानिप्रसक्तेः। अग्नेरौष्ण्यवज्जलस्य शीतस्पर्शद्रवत्वयोः स्वाभाविकधर्मस्यनिषेधायोगात् तथा ब्रह्मणोऽपि स्वाभाविकधर्मनिषेधस्य चतुर्मुखेनापि अशक्यत्वात्। अन्यथा शुष्कतर्कैः श्रुतिसिद्धस्वाभाविकतत्वस्यापि बाधाभ्युपगमे ब्रह्मस्वरूपस्यापि बाधो वक्तुं सुशकः सामान्ययोगक्षेमवत्त्वात्। किञ्च ब्रह्मणो निर्विशेषत्वं वेदान्तविचारविषयत्वमेवायुक्तम्। तथात्वे च जिज्ञासाशास्त्रारम्भस्यैव वैयर्थ्यात्। किञ्च ब्रह्मणि परधर्मारोपार्थमेव केचित्सत्या एव धर्माः स्वीकार्याः इदंत्वादिना ज्ञात एव शुक्त्यादौ धर्मान्तरारोपदर्शनात्। तदुक्तम्—

धर्मारोपोऽपि सामान्यधर्मादीनां हि दर्शने ।
सर्वधर्मविहीनस्य धर्मारोपः क्व दृश्यते ॥ इति ।

ननु अभावरूपा धर्मास्तत्र सन्तीति चेत्? न, नाभावत्वं तत्र हेतुरतिप्रसङ्गात् किन्तु प्रामाणिकत्वमेव। तच्च भावेष्वपि समानं तस्मान्न ब्रह्मणो निर्विशेषत्वसिद्धिः। अपि च निर्विशेषे किं प्रमाणं प्रत्यक्षम् वानुमानं वा शब्दो वा? नाद्यौ अनङ्गीकारात् निर्विशेषत्वभङ्गात्। "नेन्द्रियाणि नानुमानम्" इति श्रुतेश्च। नापि पदरूपः शब्दस्तत्र मानं, गुणक्रियाजातिरूपनिमित्ताभावेन मुख्यवृत्तेरयोगात्, अस्वीकाराच्च, वैदिकशब्दस्य डित्थादिवत् साङ्केतिकत्वायोगाच्च, आरोपितनिमित्तविशिष्टविषयप्रतीतेश्च, निर्विशेषे प्रामाण्यायोगाच्च। गौण्याश्च मुख्यायाश्च मुख्यार्थगुणयुक्ततयैव स्वार्थोपस्थापकत्वात्। लक्षणायाश्च वाक्यार्थसम्बन्धितावच्छेदकरूपवत्तयैव स्वार्थोपस्थापकत्वादस्यान्वयप्रतियोग्यवच्छेदकरूपेणैव स्वार्थोपस्थापकतया निर्विशेषे वृत्तिमात्रायोगात्। अत एव नोपनिषद्वाक्यरूपः शब्दस्तत्र मानम्। असंसर्गत्वादिति सङ्क्षेपः शिष्टस्योपरिष्टाद्वक्ष्यमाणत्वात्।

ननु "स्वानुभूत्यैकमानाय" इत्यभियुक्तोक्तः स्वतः सिद्धत्वात् प्रमाणान्तरानपेक्षेति चेत्? न, सर्वमपि स्वतः सिद्धमिति सुवचत्वात्, विप्रतिपत्त्ययोगाच्च, शास्त्रवैयर्थ्याच्च। नचाज्ञाननिवृत्त्यर्थे शास्त्रस्य सार्थक्यमिति वाच्यम्, अज्ञानाविरोधिन्याः स्वतः सिद्धेर्घटादावपि सुवचत्वात् निर्विशेषं ब्रह्म तुच्छं प्रमाणशून्यत्वात् खपुष्पादिवदित्यनुमानाच्च। तस्मान्नाप्रमेयत्वसिद्धिरिति सङ्क्षेपः। नापि निर्विशेषस्वप्रकाशात्मकज्ञानेऽज्ञानसम्भावनावकाशः परस्परात्यन्तविरुद्धस्वरूपत्वात् तमोदिवाकरवदेकत्रावस्थातुमशक्यत्वात्। ज्ञानाज्ञानयोर्नहि सूर्यतमसोरिवात्यन्तविरोधिनोरेकत्रावस्थानं चतुर्मुखेनापि प्रतिपादयितुं शक्यम्। नाप्यज्ञानस्य कल्पितत्वयोगसम्भावनावकाशः कल्पनायां प्रयोजकाभावात्। किं तत्र प्रयोजकं ब्रह्म वा ज्ञानं वा उभयं वा अन्यद्वेति विवेचनीयम्। नाद्यः, ब्रह्मणो निरीहत्वेन प्रयोजकत्वायोगात्। अन्यथा प्रयोजकस्य नित्यत्वेन प्रयोज्याया अज्ञानकल्पनाया अपि नित्यत्वापत्त्या निवृत्त्यभावप्रसङ्गात्, अनिर्मोक्षप्रसङ्गाच्च निर्विशेषवादो दत्ततिलाञ्जलिः स्यात्। नापि द्वितीयः, आत्माश्रयदोषप्रसङ्गात्, अज्ञानस्य ब्रह्मवदाश्रितत्वाच्च।

नापि तृतीयः, अन्योन्याश्रयप्रसक्तेः। न चतुर्थः, उभयेतरतत्त्वान्तरा- नङ्गीकारात्। अज्ञानकल्पनाप्रयोजकाज्ञानान्तरस्वीकारे तस्याप्यन्य- दन्यत्कल्पनेऽनवस्थाप्रसङ्गात्। तस्मान्नाज्ञानकल्पनासम्भवः। नापि तस्य मिथ्यात्वं, लक्षणासिद्धेः। न तावत्सद्विविक्तत्वं सतोऽपि तदन्तर- विविक्तत्वात्। नापि सत्त्वानधिकरणत्वं निर्धर्मकब्रह्मण्यतिप्रसङ्गात्। न च निर्धर्मकत्वादेव सत्त्वानधिकरणत्वं तस्येति वाच्यम्, निर्ध- र्मकत्वरूपहेतोः सत्त्वानधिकरणत्वाभावरूपसाध्यस्य च भावाभावा- भ्यां व्याघातेनाभावरूपधर्मनिषेधयोगात्। अन्यथा सत्त्वानधिकरण- त्वस्यापि तत्राभावेनैतद्व्यावृत्त्यर्थमनिर्वाच्यलक्षणे सत्त्वानधिकरण- त्वरूपविशेषणायोगात्। न च प्रमित्यविषयत्वं मिथ्यात्वं ब्रह्म तु वेदान्तजन्यवृत्तिव्याप्यमिति वाच्यम्, शुक्तिरूप्यादेरपि व्यवसाय- द्वाराऽनुव्यवसायं प्रति साक्षाद्बाधकज्ञानं प्रति निषेध्यत्वेन विषय- त्वात्। सत्त्वप्रकारकप्रमां प्रति साक्षादविषयत्वं चेत्? आवश्यकत्वात्। सत्त्वाभाव एव मिथ्यात्वं स्यात् तथात्वे चापसिद्धान्तापत्तेः। नापि भ्रान्तिविषयत्वं तत्त्वं, ब्रह्मणोऽप्यधिष्ठानत्वेन तद्विषयत्वात् भ्रान्ति- मात्रविषयत्वस्योक्तरीत्या शुक्तिरूप्यादावभावात्। अध्यस्ततया भ्रान्ति- विषयत्वं चेत्? विशेषणवैयर्थ्यात् विशेषमात्रस्य निरुच्यमानमि- थ्यात्वानतिरेकात्। नापि बाधकज्ञानविषयत्वं ब्रह्मण्यतिव्याप्तेः। नापि ज्ञाननिवर्त्यत्वम् उत्तरज्ञाननिवर्त्यपूर्वज्ञानादाविव सत्त्वेनाप्युपपत्तेः॥ नापि स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् आरोपितस्य संयोगस्यात्यन्ताभावस्त्वनारोपितसंयोगस्यात्यन्ताभावादन्य एव व्यावृत्तिरिति वाच्यम्, शुक्तिरूप्यादौ तदभावादित्युक्तत्वात्। नचावि- द्यातत्कार्ययोरन्यतरत्वं, अनादौ जीवब्रह्मविभागादावव्याप्तेः; तस्मा- न्मिथ्यात्वलक्षणासिद्धिरेव। किं वा मिथ्यात्वे प्रमाणं, न तावत्प्रत्यक्षं, वर्त्तमानमात्रग्राहिणस्तस्य त्रैकालिकबाध्यत्वग्राहित्वायोगात् अती- न्द्रियत्वाच्च ज्ञानस्य। नाप्यनुमानं, तस्य प्रत्यक्षमूलकत्वात्। नाप्या- गमः, अप्रसिद्धत्वात्। न च, "एकमेवाद्वितीयम्" इत्यादिश्रुतौ अद्वितीयादिशब्दैर्द्वितीयमात्रनिषेधान्मिथ्यात्वे तदेव वाक्यं प्रमाण- मिति, अद्वितीयादिपदार्थस्य साम्यादिनिषेधविषयकत्वेन पूर्वमेव- व्याख्यातत्वात्। तत्सिद्धो मिथ्यात्वे प्रमाणाभाव इति। एवमज्ञाना- सिद्ध्या तदध्यासस्य सुतरामसिद्धेः। तथाहि यत्राज्ञानाध्यासस्त-

ज्ञानस्वरूपं ब्रह्माज्ञानविरोधि न वेति विवेचनीयम् । नाद्यः, अत्यन्तविरोधिनोस्तमःप्रकाशयोरिवेतरेतराध्यासायोगात् । नापि द्वितीयः, अनिवृत्तिप्रसङ्गात् । किञ्च ज्ञानं नाज्ञानविरोधीति वाक्यस्योपहासमात्रत्वात् "सूर्यो नान्धकारविरोधी" इतिवत् स्वरूपहानिप्रसङ्गात् । ज्ञानाज्ञानयोरितरेतरविरोधित्वस्यैव लक्षणत्वात् तदभावे स्वभावत्याग एव स्वरूपहानिरिति यावत् । ननु स्वरूपज्ञानस्याज्ञानाविरोधित्वेऽपि प्रमाणजन्यज्ञानस्य वृत्त्याख्यस्य तन्निवर्तकत्वान्नोक्तदूषणावकाश इति चेत ? न, भिन्नविषयत्वात् । प्रमाणजन्यं वृत्त्याख्यं शुद्धविषयकं विशिष्टविषयकं वा ? नाद्यः, तवानङ्गीकारात् । अन्यथा प्रमेयत्वापत्तेरनिष्टत्वात् शुद्धं ब्रह्म मिथ्या प्रमेयत्वात् यदेवं तदेवं तव मते प्रपञ्चवत् । नापि द्वितीयः, इतरविषयकत्वात् । नहि घटविषयकज्ञानस्य पटकुड्यादिविषयकाज्ञाननिवर्तकत्वं सम्भवति अज्ञानतन्निवर्तकज्ञानयोरेकविषयकत्वनियमात् । अन्यथाऽतिप्रसङ्गस्य दुर्वारत्वात् । प्रयोजकाभावादपि अध्यासाभावस्तद्विकल्पश्च पूर्वमेव निरस्तः । किञ्चाज्ञानं ब्रह्मस्वरूपावरकं तद्धर्मविशेषावरकं वा ? नाद्यः, जगदान्ध्यप्रसङ्गात् । न द्वितीयः, स्वरूपेतरधर्मानङ्गीकारात् । ननु निर्विशेषश्रुतिविरोधाद्धर्मविशेषानङ्गीकारेऽपि स्वरूपस्यैवानन्दांशमात्रावृतत्वेन ज्ञानसत्तांशस्यानावृतत्वात् नोक्तदोषस्पर्शावकाश इति चेत ? न, असम्भवात् । न तावदानन्दादयो धर्मविशेषाः तदनङ्गीकारस्य त्वयैवोक्तत्वात् । नापि स्वरूपविशेषाः, निरवयवे वस्तुनि अंशादिकल्पनाया अन्याय्यत्वात् । अन्यथा सावयवत्वापत्त्या मिथ्यात्वापत्तेः । ब्रह्म मिथ्या अंशवत्त्वात् यदेवं तदेवं घटादिवदित्यनुमानात् निरवयवशास्त्रव्याकोपात, निर्विशेषत्वसिद्धान्तभङ्गाच्च । किञ्चाज्ञानाश्रयविषययोरसिद्ध्यापि अध्यासासिद्धिः । तच्च वक्ष्यते "नाश्रयो न विषयो भवान्" ( २३ श्लो० ) इत्यत्रश्लोके । अपि च किं बहुना ? निर्विशेषे सर्वथाप्यध्यासासम्भव एव अध्यासाधिष्ठानस्य ; तत्साधकबाधकोभयधर्मवत्त्वनियमात् । यथेदं रजतमिति प्रतीतौ तदधिष्ठानभूतायाः शुक्तेरुभयधर्मवत्त्वेनैव तत्साधकेतरसामान्येदंताधर्मावच्छिन्नतया भासमानायां तस्यां तद्विरोधिद्वितीयशुक्तित्वविशेषधर्मावच्छिन्नाधिष्ठानस्वरूपावरणे तत्प्रतीतिसिद्धिः । तद्विरो-

धिशुक्तित्वावच्छिन्नाधिष्ठानरूपशुक्तिविषयकप्रत्यक्षज्ञानेनैव तद्बाधनियमात्। प्रकृते तु तद्विपरीत एव सर्वविशेषशून्यत्वादधिष्ठानत्वायोगः। अज्ञानेन शुद्धस्वरूपमावृतं न वा ? आद्ये, अधिष्ठानत्वासिद्धेः। द्वितीये, स्वरूपभानादेवाध्यासाभावः। किञ्च शुद्धस्वरूपस्य त्वयाऽज्ञानाविरोधित्वाभ्युपगमेन कथञ्चित्कूटकल्पनयाध्यासाङ्गीकारेऽपि विशेषधर्मानङ्गीकारात् तद्बाधकविशेषधर्मावच्छिन्नाधिष्ठानविषयकाविरोधिज्ञानाभावेन सर्वथा तन्निवृत्त्यभावाद् अनिर्मोक्षप्रसङ्गो दुर्वार इति निष्कर्षः। किञ्च तदभीष्टोपादानत्वमपि दुर्निरूप्यम्। तथाहि, किन्तावदुपादानकारणं ? रज्ज्वाः सूत्रद्वयवत् मायाविशिष्टब्रह्म वा, मायाशक्तिमद्वा ? जगदुपादानं मायाश्रयं वा ? आद्ये रज्ज्वाः सूत्रे इव मायाब्रह्मणी उपादाने निर्विकारश्रुतिस्तु केवलपरेति विवक्षितम्। द्वितीये, मायोपरागाद् ब्रह्म विकारि निर्विकारश्रुतिस्तु तदनुपरक्तब्रह्मविषयिकेति। तृतीये तु तन्तुद्वारांशुः पटस्येव मायाद्वारा ब्रह्मोपादानम् श्रुतिस्तु (१) अद्वारकविकारनिषेधपरेति विवरणोक्तेरितिचेत् ? न, आद्ये मायावत्तन्तुवच्च ब्रह्मापि विशिष्य ब्रह्मणो निर्विकारित्वोक्त्ययोगात्। किञ्च परमार्थसद्रूपस्य ब्रह्मणो जगदुपादानत्वे कार्य्यस्यापि पारमार्थिकसत्तायोगोऽपरिहार्य्य एव स्यात् सितासितसुत्रकार्य्ये पटे सितत्वादिवत् ब्रह्मोपादानस्वभावस्योपादेये धीमात्रं अविद्यास्वभावस्यापि प्रपञ्चे धीमात्रत्वापातात्। सन्मात्रोपादानकत्वं सत्त्वे तन्त्रमितिचेत् ? न, अनिर्वाच्यत्वमपि न स्यात् तन्मात्रोपादानकत्वाभावात्। न द्वितीयः मायाख्यहेतूपरागभावाभ्यां विकारभावाभावविवक्षा चेत्? मृदादिसाधारण्यं मायाविशिष्टं ब्रह्म विकारि। निर्विकारश्रुतिस्तु विशेष्याभिप्रायेतिचेत् ? न, विशिष्टस्य ब्रह्मत्वे निर्विकारश्रुतिविरोधः, अब्रह्मत्वे न नो हानिः ब्रह्मोपादानत्वप्रतिज्ञाभङ्गस्तु तवैवानिष्टः। एतेन जगदुपादानाज्ञानरूपमायाविवर्त्ताधिष्ठानब्रह्मणः विशिष्टब्रह्मकारणवादोऽपि निरस्तः। किञ्च विशिष्टस्य मृदादिवत् धर्मिसमसत्ताकरूपान्तरापत्तिरूपपरिमाणाङ्गीकारे विवर्त्तसिद्धान्तहानिः। विशिष्टस्य परिणामः, शुद्धस्य तु विवर्त्त इति चेत् ? न, शुद्धे विव-

(१) 'अद्वोरक' इत्यादर्शे पाठः।

त्त्वार्थम् आरोपितविकारस्यावश्यकत्वान्निर्विकारश्रुतेस्तत्परत्वं न स्यात् । श्रुतिर्विशेष्यस्यैव तात्त्विकविकाराभाव परेति चेत् ? तर्हि विशिष्टे विकारत्वोक्तिरयुक्ता स्यात् । तत्त्वतो निर्विकारे आरोपितविकारायोगात् । नापि तृतीयः, अशोस्तन्तुं प्रतीव ब्रह्मणः अनादिमायां प्रति उपादानत्वाभावात् । भ्रमाधिष्ठानत्वमुपादानमिति चेत् ? न, उपादाने मृदादौ भ्रमाधिष्ठानत्वस्याधिष्ठाने च शुक्त्यादावुपादान [ त्व ] स्य चाव्यवहारात्, पारिभाषिकोपादानत्वस्य चानुपादानत्वे पर्य्यवसानात् । एतेनासत्यरूपान्तरापत्तिर्विवर्त्तः, सत्यरूपान्तरापत्तिस्तु परिणामः, रूपान्तरापत्तिमात्रमुपादानत्वम् । तच्च ब्रह्मणो विवर्त्तरूपविशेषणादप्युपपन्नम् । निर्विकारश्रुतिस्तु तात्त्विकाविकाराभिप्रायिका । ब्रह्म चाज्ञातं प्रपञ्चरूपेण विवर्त्तते इत्यज्ञानमपि परिणामितयोपादानान्तर्गतं रूप्यमपि शुक्तिविवर्त्तत्वात् अज्ञानपरिणामत्वाच्चोभयोपादानकमिति निरस्तम् । त्वयापि मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयम् सत्यत्वे कार्यस्यापि कारणस्वभावतया सत्यत्वप्रसङ्ग इति वदता सत्यस्यासत्यरूपापत्तेर्निषेधात्, स्वभावत्यागप्रसङ्गाच्च । किञ्च सत्यस्यासत्यरूपापत्तौ तदापत्तियोग्यतारूपधर्मोऽप्यवश्यं स्वीकार्यः, सर्वसामर्थ्यशून्यस्य तथात्वासम्भवात् । तथात्वे च निर्विशेषसिद्धान्तभङ्गात् । किञ्च सत्यारोपितधूमानुगतधूमत्वसामान्यस्यैव सत्यासत्यरूपान्तरापत्त्या अनुगतोपादानत्वसामान्यस्याप्यभावाच्च शुक्तिब्रह्मणोरेव रूप्याकाशाद्युपादानत्वसम्भवेऽविद्यान्वयव्यतिरेकयोर्निमित्तत्वेनाप्युपपत्तेरविद्योपादानकल्पनायोगाच्च । न च परिणामित्वेनाविद्याकल्पनं असत्यस्य रूप्यादेः सत्यरूपापत्तिमत्परिणाम्यपेक्षाभावात् विकारित्वेनाविद्याकल्पनं तु तत्वतो निर्विकारे ब्रह्मणि अतात्विकविकाराङ्गीकारात्परेणैव निरस्तम् । एतेन रूपान्तराभेदधीविषयत्वं वा कार्याभेदधीविषयत्वं वोपादानत्वं प्रतीतेः प्रमात्वाप्रमात्वाभ्यां परिणामविवर्त्ताविति निरस्तम् । आद्ये तत्त्वंपदार्थयोः क्षीरनीरयोः खण्डगोत्वयोश्चोपादानोपादेयत्वपातात् । द्वितीये सदृशे सन्निहिते निमित्तेऽपि कार्याभेदभ्रमसम्भवेनातिव्याप्तिः । तस्मादकारणस्यातीतादेरत्यन्तासतश्च भ्रमाधिष्ठानत्वदर्शनात् भ्रमाधिष्ठाने च शुक्त्यादौ कारणत्वोपादानत्वयोरव्यवहारान्न परपक्षे भ्रमाधिष्ठानस्य ब्रह्मण उ-

पादानकारणत्वम् । ननु मायोपादानम् ईश्वरो निमित्तं शुद्धब्रह्माधिष्ठानमिति चेत् ? न, अभिन्ननिमित्तोपादानत्वाभावेन त्वन्मते तदर्थस्य प्रकृत्यधिकरणादेरनुपपत्तेरिति सङ्क्षेपः । नापि मायावच्छिन्नस्येश्वरत्वसम्भवः भ्रान्तित्वप्रसङ्गात्, सर्वज्ञत्वादिश्रुतिबाधाच्च । नच मायावच्छिन्नविषयकैव सार्वज्ञ्यादिश्रुतिः शुद्धे तु तदयोगादिति वाच्यम्, बालभाषितत्वात् । मायावच्छिन्नस्य भ्रान्तस्य सार्वज्ञ्यादियोगमनुन्मत्तः को ब्रवीति, जन्मान्धस्य कमलनयनादिसम्बोधने तदुपहासमात्रत्वात् । नच

मायां च प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।

इति श्रुत्यैव कण्ठरवेण मायित्वपाठात् तथात्वे च श्रुतेरेवोन्मत्ततायोगो वाच्यो नास्मद्दोष इति वाच्यम्, मायित्वमात्रं मायानियन्तृत्वं तच्च सर्वज्ञस्याचिन्त्यानन्तस्वाभाविकशक्त्याद्याश्रयस्यैवासाधारणधर्मो नान्यस्य स्त्रीसंयोगात्प्रजोत्पादनं पुंस्त्वशक्तिमत एव न क्लीबस्येति यावत् जगत्कर्तृत्वमपि तस्यैव न मायावच्छिन्नस्य निर्विशेषस्य वा ? तथाहि, किञ्चेदं कर्तृत्वं परिभाषया शुक्त्यादिवदधिष्ठानत्वमात्रं वा, भ्रान्तवदध्यासद्रष्टृत्वं वा, मायाविन्मोहकत्वं वा, कुलालादिवदुपादानगोचरप्रयत्नचिकीर्षादिमत्त्वं वा ? नाद्यः, त्वन्मतेऽधिष्ठानातिरिक्तोपादानत्वाभावेन कर्तृत्वोपादानत्वयोः सामानाधिकरण्योक्त्ययोगात्, "तदैक्षत नामरूपे व्याकरोत्" इत्यादिश्रुतिबाधाच्च । नहि चेतनोऽचेतनो वा स्वभिन्नारोपितं सङ्कल्प्य करोति । अत एव न द्वितीयः, भ्रान्तस्योत्प्रेक्षापूर्वकमारोपितकर्तृत्वाभावात् ब्रह्मणोऽभ्रान्तत्वेनाकर्तृत्वस्य जीवस्य भ्रान्तत्वेन कर्तृत्वस्यापाताच्च । न चेष्टापत्तिः, श्रुत्यादिविरोधात् जगत ईश्वरं मुक्त्वा संसारिण उत्पत्त्यादि संभावयितुमशक्यमित्यादित्वद्भाष्यविरोधाच्च । ननु शुद्धस्य भ्रान्तत्वेऽपि मायाशबलितकर्त्रीश्वरो भ्रान्त इति चेत् ? न, ईश्वरस्य भ्रान्तत्वे जीववत्संसाराद्यापातेन बहुश्रुत्यादिविरोधात् । किञ्च पक्षद्वयेऽपि "वैषम्यनैर्घृण्येन सापेक्षत्वात्" इत्यादिसूत्रेषु कर्मसापेक्षत्वेनैव वैषम्यादिपरिहारो न युक्तः स्यात् अधिष्ठानत्वादिना तदप्रसक्तेः । न तृतीयः, व्यामोहनीयजीवादर्शने व्यामोहकत्वायोगात्, दर्शने च भ्रान्तत्वापत्तेः, व्यामोहकत्वस्याप्यारोपितत्वेनान्योन्याश्रयाच्च । "नामरूपे व्याकरवाणि"

इत्यादिश्रुत्याऽनुपपत्तेश्च । नहि मायावी राजादिकं करवाणीति संकल्प्य करोति किन्तु दर्शयानीति सङ्कल्प्य दर्शयति । किञ्च पक्षत्रयेऽपि "जन्माद्यस्य यतः" ( ब्र० सू० १-१-२ ) इतिसूत्रेऽर्थलब्धसार्वज्ञादिस्फुरणार्थं "शास्त्रयोनित्वात्" ( ब्र० सू० १-१-३ ) इति सूत्रमिति यत्परमतं तद्भङ्गः स्यात्, भ्रमाधिष्ठानत्वादिना सार्वज्ञाद्यलाभात् । नापि चतुर्थः, कल्पितत्वे उक्तलक्षणवत्त्वायोगात् । नहि घटादिकं कुलालेन कल्पितं रूप्यादि भ्रान्तेन वाऽन्येन वा क्रियते इति सङ्क्षेपः । नाप्यविद्यावच्छिन्नस्तत्र प्रतिबिम्बितो जीव इति युक्तिमत्, लक्षणप्रमासिद्ध्योरविद्यानुपपत्तेः । तथाहि किन्तावदविद्यालक्षणम् ? अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं वा भ्रमोपादानत्वं वेति ? नाद्यः, सादिशुक्त्याद्यवच्छिन्नचैतन्यावरकाज्ञानानामनादित्वायोगेन आरोपिताभावोपादानकाज्ञाने भावत्वाभावेन चाव्याप्तेः । अभावस्य भावोपादानकत्वेऽसत्यस्य सत्योपादानकत्वापातात् । तस्याज्ञानानुपादानकत्वे ज्ञानान्निवृत्तिर्न स्यात् । शुद्धब्रह्म वृत्तिव्याप्यमपि नेति मतं तदज्ञानचरमसाक्षात्कारानन्तरभाविजीवन्मुक्त्यनुवृत्ते ज्ञाने उर्ध्वाग्रत्वाद्यधिष्ठानतत्त्वसाक्षात्कारानिवर्त्यजलस्थवृक्षाधोऽग्रत्वादिसोपाधिकभ्रमोपादानाज्ञाने च ज्ञाननिवर्त्यत्वाभावाच्च । नह्यब्रह्मज्ञानेन ब्रह्माज्ञाननिवृत्तिः जीवन्मुक्त्यनुवृत्ताज्ञानस्य ज्ञानविर्त्यत्वे च स्वकार्यैरारब्धकर्मभिः सह पूर्वमेव साक्षात्कारेण निवृत्तिः स्यात् । नच सोपाधिकभ्रमोपादानमज्ञानमुपाधिनिवृत्तिसचिवतत्त्वज्ञाननिवर्त्यं तस्य स्वप्रागभावं प्रतीवाज्ञानं प्रत्यप्यन्यनिरपेक्षस्यैव निवर्त्तकत्वात् । नहि ज्ञाते कचिदपि न जानामीति धीरस्ति चैतन्याविद्यासम्बन्धेऽतिव्याप्तेश्च । साक्षाज्ज्ञाननिवर्त्यत्वविवक्षायां चानादिपदे वैयर्थ्यम् असम्भवश्च । कल्पितत्वेन दोषजन्यधीमात्रशरीरस्याज्ञानस्यानादित्वाऽयोगात् ज्ञाननिवर्त्यस्याभावविलक्षणस्य रूप्यवदनादित्वायोगात् । अज्ञानं न ज्ञाननिवर्त्यम्, अनादिभावरूपत्वात् । किञ्च त्वन्मतेऽज्ञानस्य भावाभावविलक्षणत्वेन भावत्वासम्भवात् । भावविलक्षणस्याभाववत्त्वनियमेन भावविलक्षणेऽभाववैलक्षण्यस्याप्ययोगाच्च । किञ्चानादेरभावविलक्षणस्यात्मवदनिर्वर्त्यत्वम् । अपि च त्वन्मते आत्मन्यभाववैलक्षण्यातिरेकेण भावत्वाभावादतिव्याप्तिश्च । ननु योऽनादिभावः सोऽनिर्वर्त्य इति सामान्यव्याप्तेरज्ञानं

ज्ञाननिवर्त्यमिति विशेषव्याप्तिर्बलीयसी। किञ्चाभाववैलक्षण्यादा-त्मवदनिवृत्तौ भाववैलक्षण्यात्प्रागभाववन्निवृत्तिः किन्न स्यादिति चेत्? न, अनादिभावत्वेन विरोध्यसन्निपातस्याप्यनुमानात् यः प-र्वतः सोऽनग्निक इति विशेषव्याप्तिरित्यतिप्रसङ्गात्, त्वदभिमता-नाद्यज्ञानस्य ज्ञाननिवर्त्यत्वे दृष्टान्ताभावेनाज्ञानशब्देन सादिभ्रा-न्त्यादिसाधारणज्ञानविरोधिमात्रस्य विलक्षणीयत्वेन विशेषव्या-प्तित्वायोगाच्च, भाववैलक्षण्यान्निवृत्तावत्यन्ताभावस्य ध्वंसस्य च निवृत्त्यापाताच्च।

नापि द्वितीयः, यावन्ति ज्ञानानि तावन्त्यज्ञानानीति पक्षे अत्र भ्रमपूर्वकप्रमानिवर्त्याज्ञानेऽभावारोपनिवर्त्तकप्रमानिवर्त्याज्ञाने चा-व्याप्तिः, अभावस्य निरुपादानकत्वेऽपि भावरूपाज्ञानोपादानकत्वायो-गात्। किञ्च ब्रह्म जगदुपादानं मायाधिष्ठानमिति दोषाऽभावेऽपि मायावच्छिन्नं ब्रह्मोपादानमितिपक्षेऽसम्भवः। रज्ज्वाः सूत्रद्वयमिव मायाब्रह्मणी जगदुपादाने इति मतेऽतिव्याप्तिः। अपि च अर्थज्ञानरूपस्य भ्रमस्य भावविलक्षणत्वेन निरुपादानत्वसम्भवः नच भावविलक्षण-ज्ञानोपादेयस्य भ्रमस्य भावत्वं युक्तं कार्यकारणयोरभेदात्सोपादा-नत्वे च भावत्वं तन्त्रं, न तु भावविलक्षणत्वं गौरवात्। अपि च अर्थस्य मन्मते सत्त्वेन त्वन्मते च सद्विलक्षणत्वे निरुपादानत्वात्, ज्ञानस्य तु त्वन्मते सद्विलक्षणत्वेन निरुपादानत्वात्, मन्मते सत्त्वेन तत्तत्प्रत्यात्मनोऽन्तःकरणस्य वोपादानत्वात् नाज्ञानमु-पादानम्। सोपादानत्वे च तदा चित्सत्त्वमेव तन्त्रं, न तु सद्विल-क्षणत्वं, कदाचिदेव सत्त्वेन प्रतीयमानत्वं वा, गौरवात् तुच्छस्यापि शब्दाभासादिना सत्त्वेन प्रतीतिसम्भवाच्च। नच ज्ञानस्य सत्त्वेऽर्थ-स्यापि सत्त्वप्रसङ्गः, मिथ्याभूतमज्ञानं वेदान्ततात्पर्यं चरमसाक्षा-त्कारं च प्रति विषयस्य ब्रह्मणः सत्त्ववत् सन्तं व्यवहारं परोक्षज्ञानं च प्रति विषयस्य खपुष्पादेरसत्त्ववत् सत्त्वसाक्षिवेद्याज्ञानादेर्मिथ्या-त्ववच्चोपपत्तेः। एतावन्तं कालम् रजतज्ञानं ममासीदिति ज्ञानस्य सत्त्वानुसन्धानाच्च। असद्वैलक्षण्यमात्रेण सत्त्वानुसन्धाने च सद्वै-लक्षण्येन 'नासीत्' इत्यनुसन्धानापातात्। अर्थेप्यासीदित्यनुसन्धा-नापाताच्च। एतावन्तं कालमिहादर्शे मुखमासीदित्यनुसन्धानं तु प्रति बिम्बस्थं छायादिवत्त ससत्त्वात्। किञ्चाज्ञानस्य भावविलक्षणत्वात्

सद्विलक्षणत्वाच्च नोपादानत्वम्। अन्यथा तत्त्वज्ञानप्रागभाव एव भ्रमोपादानं स्यात्। उपादानत्वे च भावत्वं तन्त्रं, न ह्यभावविलक्षणत्वमसद्विलक्षणत्वम्; गौरवात्। किञ्च यद्यत्पिण्डादिवत् यदनुविद्धतया भाति तत्तदुपादानकम्। नच रूप्यं तज्ज्ञानं वा अज्ञानमिति भाति। यत्तु ज्ञानलक्षणं न च प्रपञ्चेऽतिव्याप्तिः, तस्याज्ञानपरिणामत्वात्। नहि पृथिवीलक्षणस्य घटादावतिव्याप्तिरिति। तत्र जीवन्मुक्त्यनुवृत्ताज्ञानादौ अव्याप्त्यादेरुक्तत्वात् यद्भावरूपाज्ञानं प्रतिपन्नं तस्य शुक्तिरूप्यादिव्यावृत्तस्य कारणावस्थानाद्यज्ञानस्यैव रूपत्वेन रूप्यत्वस्य तेजोलक्षणत्वे तत्परिणामेऽप्यवादाविवास्यापि प्रपञ्चेऽतिव्याप्तिश्चेति सङ्क्षेपः।

नाप्यविद्यायां प्रमाणमस्ति, अनुपपत्तेः, प्रमाणविषयत्वे सति निषेधायोगाच्च। ननु अहमज्ञो मामन्यं च न जानामि त्वदुक्तमर्थं च न जानामीति प्रत्यक्षस्यैव प्रमाणत्वात् 'एतावन्तकालं न किञ्चिदवेदिषम्' इति परामर्शसिद्धसौषुप्तिकानुभवश्च प्रमाणम्। ज्ञानम् स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वानिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्। अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीपवदिति। विवरणोक्तानुमानं च "नासदासीन्नो सदासीत् तम आसीत्" इत्यादि श्रुतिश्चाप्रमाणमितिचेत् ? न, आभासमात्रत्वात्। तथाहि, न तावत्प्रत्यक्षमत्र प्रमाणं त्वन्मतेऽप्यहमर्थस्य भावरूपाज्ञानानाश्रयत्वेनाहमज्ञोऽहं न जानामीत्यादेः प्रामाण्याय ज्ञानाभावविषयत्वावश्यम्भावात् साक्षिवेद्यसुखदुःखाज्ञानादौ प्रातिभासिके च भावरूपज्ञानाभावेन सुखं न जानामि शुक्तिरूप्यं न जानामीत्यादेर्ज्ञानाभावविषयत्वे वक्तव्ये त्वदुक्तमर्थं न जानामीत्यादेरपि तथात्वाच्च, त्वन्मते परोक्षवृत्तेर्विषयावरकाज्ञानानिवर्त्तकत्वेन परोक्षतो ज्ञातेऽपि न जानामीत्यनुभवापाताच्च। त्वन्मते जडावरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीत्यादेरपि प्रामाण्याय ज्ञानाभावविषयत्वाच्च। न च जडे आवरणरूपातिशयाभावेऽपि विक्षेपरूपातिशयस्य सत्त्वादज्ञानविषयतास्तीति न जानामीत्यनुभव इति वाच्यम्, अपरोक्षतो घटत्वेन ज्ञातेऽपि घटोऽयं पट इति वाक्याभासविक्षेपसद्भावेऽपि घटं न जानामीत्यनुभवपातात्। ननु जडं न जानामीत्यनुभवस्य जडावच्छिन्नचैतन्यावरकाज्ञानं विषय इति चेत् ?

निरसिष्यमाणत्वात्, वृत्तिश्चिदुपरागार्थेतिमते जडावच्छिन्नचैतन्यावरकाज्ञानस्याप्यभावाच्च भावरूपाज्ञानविषयत्वेनाभिमतस्य 'अहमज्ञः' इति ज्ञानस्य ज्ञानाभावविषयत्वेनाभिमतात् 'मयि ज्ञानं नास्ति' इति ज्ञानात् 'अघटं भूतलम्' इति ज्ञानस्य भूतले घटो नास्तीति ज्ञानाद्विशेषणविशेष्यभावव्यत्यासं विना इच्छाद्वेषाभावज्ञानयोरिव विषयभेदाप्रतीतेश्च, प्रतियोगिज्ञानाभ्यां ज्ञानाभावज्ञानदूषणं तु स्वव्याहतं भावरूपाज्ञानवादेऽपीदानीं वेदान्तश्रवणादिसाध्यमोक्षहेतुब्रह्मज्ञानप्रागभावस्य सत्त्वेन त्वज्ज्ञानस्य त्वयापि वक्तव्यत्वात्। नच भावरूपज्ञानेन लिङ्गेन ज्ञानाभावानुमेयमिति वाच्यम्, वृतिज्ञानस्य साक्षिवेद्यत्वेन तदभावस्यापि दुःखाद्यभाववत् साक्षिणानुपलब्ध्यभावादितिप्रतीतेः; त्वन्मते जडे भावरूपाज्ञानरूपलिङ्गाभावाच्च। अपरोक्षतो ज्ञाते भावरूपाज्ञानाभावेन न तत्र परोक्षज्ञानाभावासिद्ध्यापाताच्च, दुःखादौ प्रातिभासिके च भावरूपज्ञानाभावेन दुःखादिज्ञानाभावप्रतिपत्त्ययोगाच्च, प्रतियोग्यादिज्ञानाज्ञानाभ्यां अनुमित्यापि ज्ञानाभावस्य दुर्ग्रहत्वाच्च।

किञ्चाज्ञानं वृत्तिग्राह्यं न वेति विवेचनीयम्। नाद्यः, अनुमानाद्युक्तेरयुक्तत्वापत्तेः। रहस्यं न जानामीत्यादिपरवाक्यात् स्वनिष्ठाज्ञानधीश्च न स्यात्। किञ्च वृत्तिग्राह्यत्वे तदवच्छेदको विषयोऽपि तस्यैव गृह्यते न वेति? आद्ये, कथं तत्राज्ञानम्। त्वन्मतेऽपि वृत्तेरज्ञानविरोधित्वात्। न च परोक्षवृत्तिरज्ञानविरोधिनीति युक्तं, परोक्षतोऽपि ज्ञाते कदापि न जानामीति अननुभवात्। अज्ञानानिवृत्तौ परोक्षे व्यवहारायोगाच्च यदि च तत्राज्ञाननिवृत्तिं विना वृत्त्यैव व्यवहारसंस्कारादि तर्ह्यपरोक्षेऽपि तां विना वृत्त्यैव तत्स्यात् विषयापरोक्ष्यं त्वावश्यकाद्वृत्तिगताद् विशेषादेवेत्युक्तम्। परोक्षवृत्त्या परोक्षभ्रमानिवृत्तिप्रसङ्गाच्च अनुमित्या च ह्यज्ञानशास्त्रश्रवणेन च धर्माद्यज्ञानं निवृत्तमित्यनुभवाच्च। तस्य ज्ञानाभावत्वे च भावरूपाज्ञानं सिध्येत् परोक्षतो ज्ञातेऽप्यपरोक्षभ्रमोऽस्मन्मते उपाध्यादिदोषाद्युक्तः त्वन्मते तु भ्रमस्याज्ञानोपादानकत्वात् स न स्यादेव अन्त्ये तु तद्वदेकविषयाग्रहणेऽपि ज्ञानाभावावच्छेदकस्य ज्ञानस्य ग्रहणासिद्धिः। नच किञ्चिदहमवेदिषमिति परामर्शोऽपि एतावन्तं कालम् दुःखं नावेदिषं शुक्तिरूप्यं नावेदिषमित्यादिवत् ज्ञानाभावविषयः।

नच तदा धर्म्यादिज्ञानाभावादभावज्ञानायोगः भावरूपाज्ञानस्याप्यज्ञानत्वेन प्रतीतौ तदपेक्षणात् । यदि च विषयसामान्यविशेषितमेव ज्ञानं सुषुप्तावज्ञानविरोधनिरूपकं तर्हि तदेव तदा ज्ञानाभावनिरूपकमस्तु । ननु तदा स्वरूपेणानुभूतमज्ञानमिदानीं प्रतियोगिवियोग्यावच्छेदेनानुभूयते इति चेत् ? सत्यं ज्ञानाभावेऽपि अभावस्यापि प्रमेयत्वादिना ज्ञाने तदनपेक्षणात् । यद्वा नायं परामर्शः, किन्त्वानुमानिको ज्ञानाभावानुभवः अवस्थाविशेषत्वस्य वा इन्द्रियसंप्रसादेन तदुपरमानुमाने सामग्र्यभावस्य वा प्रातर्गजाद्यभाव इव तत्तुल्ययोगक्षेमे आत्माद्यस्मर्यमाणेऽपि नियमेनास्मर्यमाणस्य वा लिङ्गत्वात् । त्वन्मतेऽप्यहमर्थांशे परामर्शत्वाभावात् सुषुप्तावहमर्थाभावेनान्या(नु)भूते अज्ञानांशेऽप्यहमर्थस्य परामृष्टत्वायोगाच्च सुषुप्तावज्ञानस्याविद्यावृत्तिप्रतिबिम्बितसाक्षिवेद्यत्वे जागरणादावपि तद्वद्यत्वापातेन वृत्त्यभावदशायामज्ञाने सन्देहाद्यापत्त्या केवलसाक्षिवेद्यत्वे वक्तव्ये त्वन्मते नित्यज्ञानस्य संस्काराजनकत्वेनाज्ञानपरामर्शायोगाच्च । अन्यथा तवापि सुषुप्तौ ज्ञानाभावो न सिद्ध्येत् । भावरूपाज्ञानेन लिङ्गेन सोऽनुमीयते इति चेत् ? न, त्वन्मते जडेभावादित्युक्तत्वात् साक्षिवेद्येच्छादौ तदाज्ञानाभावासिद्ध्यापाताच्च । किञ्चैवं सुषुप्तिकालीनो रागाद्यभावो न सिद्ध्येत् नहि तदा रागादिविरोधी द्वेषोऽस्ति येनाज्ञानेन ज्ञानाभाव इव द्वेषेण रागाभावोऽनुमीयेत । नच ज्ञानाभावादेव रागाद्यभावसिद्धिः प्रकाशमानात्मादौ तदभावासिद्धेः । तस्मान्न प्रत्यक्षं भावरूपाविद्यायां मानम् ।

किञ्च 'अहमज्ञः' इत्यत्राहंशब्दस्य को वा शक्यः शुद्धं वा, साक्षि वा, अहङ्कारो वाऽन्यद्वा ?

नाद्यौ, अनङ्गीकारात् । अन्यथाऽस्मत्पक्षप्रवेशेन सिद्धान्तभङ्गात् ।

नापि तृतीयः, तस्य जडत्वेन प्रकृतिकार्यत्वात् ।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा (भ० गी० अ० ७ श्लो० ४)

इतिवचनात् ।

नापि चरमः तत्त्वान्तराभावात् इति सङ्क्षेपः ।

नाप्युक्तानुमानं, सुखादिप्रमायां बाधात् तस्याः साक्षिरूपत्वे-

नाज्ञाननिवर्त्तकत्वात् वृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ बाधः तस्याः स्वविषयेऽज्ञाननिवर्त्तकत्वं तद्विषयस्याभिव्यक्तापरोक्षैकरसचैतन्यसम्भेदेनापरोक्षत्वापातात। उक्तं च * विवरणे* "विषयत्वं नामानुमेयादौ सुषुप्तिवृत्तिरिति"।

अपरोक्षवृत्तेः पक्षत्वेऽपि परोक्षवृत्तौ व्यभिचारः। तद्व्यावृत्त्यर्थं हेतुविशेषणेऽप्रयोजकत्वं, सर्वभ्रमेष्वधिष्ठानत्वेनानुगतसदर्थविषयपरोक्षवृत्तौ बाधश्च। तन्निवृत्त्या ज्ञानसिद्धावेव भ्रमोपादानत्वलक्षणस्य तत्रातिव्याप्तिः स्यात्। नहि सदर्थरूपाधिष्ठानाज्ञाने क्वचिद्भ्रमः। तदन्यस्य पक्षत्वे धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च। स्वानिवर्त्यप्रथमप्रमाद्यव्यवहितायाः तस्याः द्वितीयादिप्रमायास्तमःप्रतीवाज्ञानं प्रत्यनिवर्त्तकत्वात् सूक्ष्मतत्तत्क्षणानामप्रत्यक्षत्वेन प्रकाशितप्रकाशकत्वाच्च। तदन्यस्य पक्षत्वेऽपि अनात्मविषयापरोक्षवृत्तौ बाधः, त्वन्मते जडावरकाज्ञानाभावात्। ननु घटोऽयमित्यादिवृत्तिरपि तदवच्छिन्नचैतन्यविषया अज्ञानमपि तथेति न बाध इति चेत्? न, एकाज्ञानपक्षे तदभावात्, अवच्छिन्नस्याप्यस्वप्रकाशत्वेनाप्रसक्तप्रकाशतयाऽऽवरणायोगाच्च, रूपादिहीनस्यात्मन आकाशादिवद् घटाद्यवच्छिन्नस्यापि चाक्षुषत्वाद्ययोगस्योक्तत्वाच्च, 'अयं घटः' इति शब्दजन्येन घटमात्रविषयत्वाज्ञानेनायं घट इत्यपरोक्षवृत्तेर्विषयभेदाप्रतीतेश्च। आत्मविषयापरोक्षवृत्तेः पक्षत्वेऽप्यनात्मज्ञाने व्यभिचारः, आत्मविषयत्वेन हेतुविशेषणे दृष्टान्तस्य साधनवैकल्यमिति दिक्।

साध्येऽप्याद्यं विशेषणं व्यर्थं यतो ज्ञानमज्ञानस्यैव निवर्त्तकमिति त्वन्मतेऽभावनिवृत्तेरेव भाव इति मन्मते च स्वनिवर्त्यविशेषणेनैव प्रागभावस्य व्यावृत्तिसिद्धेः अभावव्यतिरिक्तपदेनैव तद्व्यावृत्तिसिध्या शेषवैयर्थ्यम्। तस्मान्नोक्तानुमानं तत्र प्रमाणम्।

नापि शब्दः, पूर्वोक्तश्रुतेः प्रकृतिविषयकत्वात्। तथाहि, असच्छब्दोऽत्र सूक्ष्ममहदादिवाचकः। सच्छब्दःस्थूलमहाभूतवाचकः,तमःशब्दस्तदुभयहेतुभूतप्रकृतिवाचकः। तदानीम् असत् सूक्ष्मं महदादि नाऽऽसीत्, सत स्थूलमाकाशादि महाभूतादि च नासीत, किन्तु तमः कारणरूपं प्रकृतिरासीदिति श्रुत्यर्थः। "अक्षरं तमसि लीयते" इति श्रुत्यन्तरे तमःशब्दवाचकत्वदर्शनात्। नच "अविद्यायामन्तरे

वर्त्तमाना" इति श्रुत्या कण्ठरवेण पाठात्कथमपन्हूयते इति वाच्यं, तत्राविद्याशब्दस्य कर्मपरत्वात । तथान्यत्र च "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" (ईश.उ.) इति अविद्याशब्दस्य कर्मपरत्वदर्शनात् । तस्मात्पराभिमताविद्यायां किमपि प्रमाणं नास्तीति सिद्धम् ।

नाप्यविद्याप्रतीतिसम्भवः, अनुपपन्नत्वात् । तथाहि, अविद्या किं शुद्धसाक्षिचैतन्येनैव भाति किं वा वृत्तिप्रतिबिम्बितेन ? नाद्यः, निर्दोषाचत्प्रकाश्यत्वेनाविद्यायाः पारमार्थिकत्वा(१)पातात् मोक्षेऽपि तत्प्रतीत्यापत्तेश्च । तदा सा निवृत्तत्वान्न भातीति चेत ? प्रतीतिमात्रशरीरस्य प्रतीत्यनुवृत्तौ निवृत्त्ययोगात् । एतेनाज्ञानस्य राहुवत् स्वावृत्तप्रकाशेनैव स्फुरणमिति निरस्तम् । नान्त्यः, अविद्यायाः कदाचिदप्यप्रतीत्यापातात्, अन्तःकरणाविद्यावृत्त्योः प्रमाणदोषाभ्यां जन्यतयेहोभयाभावेन वृत्त्ययोगाच्च, वृत्तेरपि वृत्त्यन्तरप्रतिबिम्बितसाक्षित्वेनावस्थापातेन तदप्रतिबिम्बिततद्वेद्यत्वे मोक्षेऽपि वृत्तिप्रतीत्यापाताच्च, प्रतिबिम्बनोपाधित्वप्रयोजकस्य सत्त्वस्यापारमार्थिकत्वेन प्रातीतिक्यां वृत्तौ प्रतीत्यधीनत्वेनान्योन्याश्रयाच्चेति सङ्क्षेपः । एवं लक्षणप्रमाणप्रतीत्याद्यभावादविद्यानुपपत्त्या तदुत्तरभावितत्प्रयुक्तावच्छेदप्रतिबिम्बपक्षयोः सुतरामसिद्धिः । तथाहि, उपाध्यनन्तर्गतस्यैव परिच्छिन्नस्य वृक्षादेः प्रतिबिम्बनं दृष्टं न तदन्तःस्थस्य मत्स्यादेः, ब्रह्मणोऽविद्यादिबहिःस्थत्वं तावन्न युक्तं, सदेशत्वापत्तेः,परिच्छिन्नत्वप्रसङ्गाच्च । आकाशस्य सदेशत्वे परिच्छिन्नत्ववत् तव मते परिच्छिन्नस्य सदेशस्य च मिथ्यात्वं दुर्वारं "ब्रह्म मिथ्या सदेशत्वात् परिच्छिन्नत्वात आकाशादिवत्" इत्यनुमानात् । किञ्च नहि बिम्बप्रतिबिम्बयोरेकात्राव(२)स्थानम् । समसत्ताके न्यूनसत्ताके वोपाधौ प्रतिबिम्बो जायते न कल्पितसत्ताके । अन्यथा मरुमरीचिकादिजलेऽपि सूर्यादिप्रतिबिम्बो दृश्येत । न तु तदस्ति यथा, तद्वत्पारमार्थिकसत्ताकब्रह्मणोऽपि कल्पितव्यावहारिकसत्ताकेऽविद्यान्तःकरणादौ प्रतिबिम्बनस्यासम्भवात् । अवच्छेदवादेऽपि कृत्स्नस्यावरणे निरीश्वरत्वापत्तेः, एकदेशे पूर्ववत् स-

---

(१) दातीतिक्यां वृत्तौ प्रतीत्यधीनत्वेनान्योन्याश्रयाचेति संक्षेपः । एवं लक्षणप्रतीत्याद्यभावादविद्यानुपपत्त्या तदुत्तरभावितत्प्रयुक्तावच्छेदप्रा' इत्याधिकमादर्शे ।

(२) 'वसानम्' आदर्शे ।

देशत्वादिदूषणकदम्बयोगा इतरेतरभोगसाङ्कर्यं जीवनम्। नाप्येक- जीवसम्भावना प्रमाणाभावात्। ननु "पुरत्रयं क्रीडति देव एकः" "एको देवः सर्वभूतेषु गूढः" इतिश्रुतेरेकजीवपरत्वदर्शनादेवं चैक एव जीवः अन्येषामाभासमात्रत्वात् स्वदृष्टानेकजीववदिति चेत्? न, एकत्वे शुकादिमोक्षप्रतिपादकशास्त्रबाधात् तथात्वाभ्युपगमे च तवाभिमतजीवैकत्वश्रुतेरपि वैयर्थ्याविशेषात् गुरुशिष्यादिव्य- वहारानुपपत्तेश्च। तथाहि, उपदेष्टुर्गुरोर्निश्चिताद्वैततत्त्वं न वेति? नाद्यः, अद्वैतज्ञानवते द्वैतदर्शनात्मकशास्त्रप्रणयनासम्भवात्। द्वितीये प्रतारकत्वापत्तेः, अन्धपरम्परान्यायापत्तेश्च। किञ्च शुकादीनां यदि मुक्तिर्नासीत्तथा ममापि न भविष्यतीति विश्रम्भेण कस्यापि मुमुक्षोः श्रवणादिमोक्षसाधने निःशङ्का प्रवृत्तिर्न स्यात्। न [च] शास्त्रप्रामा- ण्याद्भविष्यतीति वाच्यम्, शुकादिमोक्षशास्त्रवैयर्थ्यवदस्यापि शा- स्त्रस्य वैयर्थ्यं स्यादेव शङ्कासम्भवात्। यत्त्वदभिमतसर्वज्ञानां गौड- पादादीनां मुक्तिर्नासीत्तर्हि तदुपदेशात्तव कथं भविष्यतीति त्व- मेव विचारय पुरत्रये जाग्रदाद्यवस्थावच्छिन्नदेहत्रये एक एव जी- वात्मा नत्ववस्थाभेदाज्जीवभेदः कृतनाशाकृताभ्यागमप्रसङ्गादिति प्रथमवाक्यार्थः। एको देव इति वाक्यन्तु ब्रह्मविषयकं सर्वव्या- पित्वसर्वभूतान्तरात्मत्वादीनां ब्रह्मासाधारणलिङ्गानां जीवेऽसम्भ- वात्। अतोऽप्रामाण्यमेवैकजीववादस्य "अंशो नानाव्यपदेशात्" इत्यादिनिर्णयशास्त्रविरोधात्। औपाधिकभेदे तु कायव्यूहस्थले योगिनः सर्वदेहेषु भोग इवैकजीवस्य सर्वदेहेषु तत्सुखाद्यनुभवा- पत्तेः। ब्रह्मण एव जीवत्वेन नित्यमुक्तत्वादि श्रुतिव्याकोपाच्च एक- स्यानेकदेहेषु प्रत्यक्त्वासम्भवाच्च। न चान्तः करणभेदस्यात्र नि- यामकत्वमिति वाच्यं, योगिनः कायव्यूहानामन्तःकरणभेदेऽपि प्रत्यक्पराग्दर्शनात्। प्रत्युताहमित्येव सर्वत्रप्रतीतिदर्शनाच्चेति सङ्क्षेपः। प्रतिबिम्बावच्छेदपक्षयोर्विशेषणानां च पूर्वमेवोद्घाटितत्वा- त्। तथा च घटावच्छिन्नाकाशवदन्तःकरणावच्छिन्नचैतन्यं जीव इति पक्षे कर्तृत्वभोक्तृत्वसमययोस्तत्रान्तःकरणवच्छेद्यचैतन्यप्र- देशस्य भिन्नत्वात् कृतनाशाकृताभ्यागमप्रसङ्गः, पदे पदे बन्धमोक्षौ च स्यातां, बद्धस्य निर्हेतुकामुक्तिः, शुद्धस्य निर्हेतुको बन्धश्चेति। प्रतिबिम्बपक्षेऽपि स्वानन्तर्गतस्य स्वसन्निहितस्य चैतन्यप्रदेशस्या-

न्तःकरणे प्रतिबिम्बस्य वक्तव्यतया तत्रान्तःकरणगमने बिम्बभेदात्प्रतिबिम्बस्यापि भेदावश्यम्भावेनोक्तदोषतौल्यादिति सङ्क्षेपः।

नापि आत्मनो देहाद्यध्यासात्संसारः, किन्तु नित्यानित्यात्मानात्मविवेकाभावादेव। तथाहि, प्रत्यगात्मनश्चिद्रूपस्यात्यन्तविरुद्धेन्द्रियदेहादिभिरध्यासायोगात् अप्रमाणिकत्वाच्च। ननु ब्राह्मणोऽहमित्यादिप्रत्यक्षात् देहतद्धर्मयोश्च तादात्म्योपलब्धेः "ब्राह्मणो यजेत" इत्यादिश्रुतेश्च सुषुप्त्यादौ तद्व्यतिरेकदर्शनाच्चेति चेत्? न, त्वन्मते ऽहमर्थस्यानात्मत्वेन 'अहं ब्राह्मणः' इत्यादेर्देहात्मैक्यविषयकत्वाभावात् उभयोरप्यनात्मत्वेन सजातीयत्वात् नैक्यप्रत्ययविरोधः। किञ्च देहात्मैक्ये प्रत्यक्षत्वे तद्विरोध्यनुमानाद्यसिद्ध्या तद्भेदसिद्ध्यापत्तेश्च। ऐक्यज्ञानस्य भेदज्ञानपूर्वकत्वात्परस्परं भिन्नत्वेन निश्चितानां देहेन्द्रियादीनां युगपदेकात्म्यैक्याध्यासाच्च। त्वन्मते देहात्मनोर्भेदस्याप्यध्यस्तत्वेन जीवब्रह्मणोरिव तत्राभेदाध्यासायोगाच्च। मिथ्यात्मत्वं ह्यधिष्ठानज्ञानबाध्यात्यन्ताभावप्रतियोगित्वम्। तद्बाध्यात्यन्ताभावप्रतियोगित्वस्य सत्त्वेऽपि सम्भवात्। अभेदश्च भेदात्यन्ताभाव इति कथं भेदमिथ्यात्वे अभेदः सत्यो न स्यात्? नच देहस्य स्वरूपेणैवाध्यासाद्देहात्मनोर्न भेदः नाप्यभेद इति वाच्यम्, अध्यस्तादपि रूप्याच्छुक्तेः स्वज्ञानाबाध्यस्य बाधगोचरस्य भेददर्शनात्। किञ्च 'अहं गेही' इति वद् 'अहं देही' इत्येव प्रतीतिः, न तु देहोऽस्मीति कस्यापि प्रतीतिः। प्रतीयते च मम गृहं ममक्षेत्रमिति, मम मनो मम चक्षुरितिभेदः। 'अहं ब्राह्मणः' 'अहं मनुष्यः' इत्याद्या प्रतीतिरपि प्रमैव, आत्मीयवर्गदेहविशेषविशिष्टस्यैव हि ब्राह्मणादिशब्दवाच्यत्वात्। अन्यथा ब्राह्मणादेः शब्दस्य देहमात्रपरत्वाभ्युपगमे "ब्राह्मणो यजेत" "प्रज्ञां कुर्वीत ब्राह्मणः" इति विधिवाक्यस्य जडविषयकोपदेशपरत्वापत्त्याऽनाप्तत्वप्रसक्तेः। एतेनोक्तश्रुतिरपि व्याख्याता। 'ब्राह्मणोऽहम्' 'अयं शूद्रः' इति प्रतीतिवद् 'देहो ब्राह्मणः' इति कदापि कस्याप्यप्रतीतिश्च 'काणोऽहं' 'बधिरोऽहम्' इत्यादिधीरपि प्रमैव चक्षुः श्रोत्रादिहीनदेहविशिष्टस्यैवान्धादिशब्दवाच्यत्वात्। किञ्च 'श्यामोऽहं' 'गौरोऽहम्' इत्यादावपि श्यामत्वादिकं किं रज्जौ सर्पस्य भीषणत्वादिकमिव धर्मैक्येन सहाध्यस्यते, किं वा स्फटिके जपाकुसुमलौहित्यमिव तेन विनैवेति? नाद्यः, धर्मैक्याध्यासाभावस्य पूर्वमेवोक्त-

त्वात् । नान्त्यः, तद्वदेव श्यामत्वादिद्वयप्रतीत्यापत्तेः । कृशोऽहं कृष्णोऽहमित्यादिस्तु पुत्रे कृशेऽहं कृश इतिवत् कर्दमलिप्तोऽहं कृष्ण इतिवच्च गौणः । नचायमध्यासो वक्तु शक्यः, पुत्रात्कर्दमाच्च सुस्पष्टं भेदप्रतीतेः । किञ्च योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थविरः प्रणप्तॄन्पश्यामीति योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेहः इति च देहभेदपूर्वकं स्वस्यैक्यमनुसन्दधानः कथं ततो भेदं न जानीयात् । नचेयं विरुद्धधर्मरूपलिङ्गजन्या भेदधीः परोक्षेति नैक्यापरोक्षभ्रमविरोधिनीति वाच्यम्, प्रत्यक्षे धर्मिणि भेदकसाक्षात्कारव्याप्तत्वात् । इह च व्यावृत्तत्वेनधीस्थदेहादिभेदकस्यानुवृत्तत्वस्यात्मनि प्रत्यभिज्ञ प्रत्यक्षसिद्धत्वात् व्यावर्त्तकसाक्षात्करस्यैवैक्यापरोक्षभ्रमेण भेदव्यवहारस्यौपचारिकत्वेन सहाविरोधाच्च । नायं भ्रमः सोपाधिकः येनाधिष्ठानतत्त्वसाक्षात्कारेऽपि स्यात् ।

किञ्च या तु श्रुतिरुक्ता तत्र किं लक्षणया देहविशेषैक्याध्यासवान् ब्राह्मणपदार्थः देहविशेषसम्बन्ध एव तदर्थः । सबन्धस्य त्वन्यथासम्भवात्, अध्यासरूप एवेति वा देहविशेष एव तदर्थः, आत्मा तु देहैक्याध्यासात्प्रवर्त्तक इति वा ? नाद्यः, विधौ लक्षणायोगात् । त्वया पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव सकलो विकलो वेत्यध्यस्यतीति भाषितत्वेन न्यायसाम्ये भृत्यमित्रादावपि सत्त्वेन शूद्रस्वामिनो ब्राह्मणादेर्यागाद्यनधिकारापाताच्च ब्राह्मणादिमित्रस्य शूद्रस्यापि वेदाध्ययनाद्यधिकारापत्तेश्च । नच कर्मार्जितेन देहविशेषेणैक्याध्यासवाँस्तदर्थः आवश्यकत्वेन स्वकर्मणा देहविशेषार्ज्जनस्यैव तदर्थोपपत्तेः सुप्तस्य जीवन्मुक्तस्य देहैक्याध्यासाभावेन "ब्राह्मणो न हन्तव्यः" इत्यादेस्तदविषयकत्वापाताच्च । नापि कदाचिदध्यासवाँस्तदर्थः, महापातकेन नष्टब्राह्मण्यस्यापि अधिकारा(१)पातात् जन्मारभ्यजीवन्मुक्तस्योक्तनिषेधाविषयत्वापाताच्च ।

अत एव न द्वितीयः, संयोगस्यात्मविभुत्वपक्षे सर्वेषु देहेषु स्वस्वामिभावस्य च भृत्यदेहे सत्त्वेऽपि इच्छानुविधायित्वस्य चातुरादिदेहेष्वसत्त्वेऽपि साक्षात्स्वामिभावस्य वा तदिन्द्रियाश्रयत्वस्य वा साक्षात्तत्प्रयत्नाक्रियाश्रयत्वस्य वा तद्भोगायतनत्वस्य वा तत्कर्मार्जितत्वस्य वा संबन्धान्तरस्य संभवात् । नच प्रयत्नादावप्यात्मैक्य-

(१) 'पाताच्च' इत्यादर्शे ।

भ्रम एव सम्बन्धः, अहंकृतिरित्यप्रतीतेः आत्मसमवायस्यात्मायुत-सिद्धेर्वा सम्बन्धान्तरस्य सत्त्वाच्च । तत्रानतिप्रसङ्गाय स्वस्वामि-भावादैक्याध्यासरूपमूलसम्बन्धाधीनः वैपरीत्यस्यापि सुवचत्वा-त् तत्कर्मार्जितत्वस्यैव मूलसम्बन्धत्वाच्च । कर्मणां तदीयत्वं चा-नादिपूर्वं तदीयकर्माधीनं वा तदाश्रितप्रयत्नजन्यत्वाधीनं वा, न तु तदीयशरीरान्तरजन्यत्वाधीनमितिनान्याश्रयः । पुत्रकामेष्टिकर्मापि न पुत्रशरीराजकं, किन्तु ग्रामकामेष्टिवत् पुत्रकर्मार्जितस्य स्वसम्बन्ध-मात्रार्जकम् ।

न तृतीयः, तस्य जडत्वादिनाऽनियोज्यत्वात् देहविशेषयुक्ते एव ब्राह्मणशब्दप्रयोगेन देहस्यातदर्थत्वाच्च । एतेन सर्वाण्यपि विधि-निषेधशास्त्राणि अध्यासमूलानीति परभाष्योक्तिर्निरस्ता । नापि, प्रमातृत्वाद्यन्यथानुपपत्त्याऽध्यासासिद्धिःतदभावेऽपि सुषुप्तावज्ञानादि-ज्ञातृत्वस्य दर्शनात् जागरणादावपि घटादिप्रमातृदशायां तत्कर्मा-र्जितत्ववत् तदैक्याध्यासस्य सदाभावाच्च । एतेन प्रमातृत्वादिक-मध्यासमूलमिति परभाष्यं निरस्तम् । तस्मान्नाध्यासंसिद्धिः । अतो नाध्यासमूलको जीवसंसारः किन्तु अनादिकर्ममूलक एवेति संक्षेपः ।

नापि, वेदान्तवाक्यविचारजन्याखण्डार्थपरत्वानुपपत्तौ तत्र लक्षणा, प्रमाणाभावात् । ननु द्विविधं वेदान्तवाक्यम्–एकं पदार्थ-निष्ठं यथा "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि तत्पदार्थपरं, "योऽयं विज्ञा-नमयः" इत्यादि त्वंपदार्थपरम्; अपरमैक्यरूपवाक्यार्थनिष्ठं यथा "तत्त्वमसि" इत्यादि द्वयमप्यखण्डार्थनिष्ठम् ।

यद्यप्यखण्डार्थनिष्ठं न तावन्निर्भेदार्थनिष्ठत्वं भेदाभावविशिष्ट-त्वरूपस्य तदुपलक्षितरूपस्य वा निर्भेदत्वस्य शब्दबोध्यत्वेऽभिप्रेते निर्घटं भूतलमित्यादिवत् सखण्डार्थत्वापत्तेः । स्वरूपसत्त्वमात्राभिप्रेते च सखण्डार्थानां सगुणवाक्यानामपि वस्तुनिर्भेदब्रह्मनिष्ठत्वेनाख-ण्डार्थत्वापातात् प्रकृष्टप्रकाशादिवाक्यष्वव्याप्तेश्च । अत एव न निर्वि-शेषार्थनिष्ठत्वम् । नाप्यपर्यायशब्दानां प्रातिपदिकार्थमात्रपर्यवसायि पयः पावकरूपानेकप्रातिपदिकार्थमात्रपर्यवसायिनि शीतोष्णस्पर्शव-न्तौ पयः पावकावित्यादावतिव्याप्तेः । नाप्येकविशेष्यपरत्वं नीलमु-त्पलमित्यादावतिव्याप्तेरिष्टापत्तेश्च; तथाप्यपर्यायशब्दानां संसर्गा-गोचरप्रमाजनकत्वं तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं वाऽख-

ण्डार्थत्वम्। उक्तं हि—

संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम्।

उक्ताऽखण्डार्थता, यद्वा तत्प्रातिपदिकार्थता (१) ॥ इति।

तत्र पदार्थनिष्ठस्य वाक्यस्य अखण्डार्थत्वे सत्यादिवाक्यमखण्डार्थनिष्ठं ब्रह्मप्रातिपदिकार्थमात्रनिष्ठं वा लक्षणवाक्यात् तन्मात्रप्रश्नोत्तरत्वाद्वा प्रकृष्टप्रकाशश्चन्द्र इतिवाक्यवदित्यनुमानम्। ऐक्यपरस्य वाक्यस्याखण्डार्थत्वे तु तत्त्वमस्यादिवाक्यमखण्डार्थनिष्ठमात्मस्वरूपमात्रनिष्ठं वा अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा सोऽयं देवदत्त इतिवाक्यवदित्यनुमानम्। एवञ्च लक्षणप्रमाणसत्त्वान्नोक्तदोषावकाश इति चेत्? न, आद्ये लक्षणे संसर्गशब्देन संसर्गमात्रोक्तौ अप्राप्तयोः प्राप्तिः, संयोग इत्यादिसंसर्गलक्षणवाक्येऽव्याप्तिः, पदस्मारितपदार्थसंसर्गोक्तौ तु(२) विभुङ्क्ष्वेत्यादावतिव्याप्तिः। तस्य पदस्मारितपदार्थसंसर्गप्रमापकत्वात्। नचेदमपि द्विषदन्नं न भोक्तव्यमिति शास्त्रमूलत्वात् शास्त्रीयपदस्मारितपदार्थसंसर्गप्रमापकम्, अस्य भुक्तिमूलत्वेनाशास्त्रमूलत्वात्। प्रतिपिपादयिषितपदार्थसंसर्गोक्तौ तु विभुङ्क्ष्वेत्यादावतिव्याप्तिः, तस्य पदस्मारितपदार्थसंसर्गप्रमापकत्वात्। चन्द्रब्रह्मादिशब्दार्थानां प्रश्नहेतुसंशयधर्मित्वेन प्रागेव सामान्यतो ज्ञाततया स्वरूपेणाप्रतिपिपादयिषितत्वात्, संसर्गप्रतियोगित्वेन तु प्रतिपिपादयिषितत्वेऽपि विवक्षितत्वे संसर्गाप्रमापकत्वासंभवात्। किञ्च शीतोष्णस्पर्शवन्तौ पयःपावकावित्यादौ त्वद्रीत्या संसर्गाप्रतिपादकेऽनेकप्रातिपदिकार्थमात्रपरेऽतिव्याप्तिः। न च धर्म्मधर्म्मिभावासहत्वमखण्डत्वं धर्मिभेदसहम्। किञ्च यौगिकार्थोपगवादिप्रश्नोत्तरे श्यामो दीर्घो लोहिताक्ष औपगवः इत्यादौ अनेकार्थात्मकवनसेनादिप्रश्नोत्तरे एकदेशस्था वृक्षा वनमित्यादौ च खण्डार्थलक्षणवाक्येऽतिव्याप्तिः प्रकृष्टादिवाक्येऽपि संसृष्टार्थत्वस्य वक्ष्यमाणत्वेनासंभवश्च। अत एवान्त्यं लक्षणमप्ययुक्तम्, असंभवात् सखण्डार्थलक्षणवाक्येऽतिव्याप्तेश्च। किञ्च प्रवृत्तिनिमित्ताभेदश्चेत् पर्यायत्वम्। तद्भेदास्त्विह नास्ति अनन्तादीनां शुद्धादन्यत्रासम्भवात्। अनन्तादिशब्दानां लक्षणयाखण्डार्थत्वे च

(१) 'शीतोष्णतार्थवतौ' आदर्शे।

(२) विषंभुङ्क्ष्वेत्येतदर्थकम्।

शुद्धे तदसिद्धेरिति लक्षणसंभवासिद्धिः। किञ्चाद्यानुमानमपि दुष्टम्, असिद्धविशेषणत्वविरुद्धत्वादिदोषवत्त्वात्। तथाहि, प्रत्यक्षादिनाऽपी दमित्थम् । इति सप्रकारकज्ञानस्यैवोपपत्तेरप्रसिद्धविशेषणत्वम् । विरुद्धत्वमपि असाधारणधर्मरूपलक्षणपरवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तेः साध्याभावव्याप्तो हेतुर्विरुद्ध इति लक्षण समन्वयात्। न च स्वरूपलक्षणस्य लक्ष्यानतिरेकात् तत्परत्वमखण्डार्थत्वाविरोधित्वं, तस्य लक्ष्यमात्रत्वे लक्ष्यलक्षणभावायोगात्। अतिरेकेऽपि यावल्लक्ष्यभावित्वादिनैव स्वरूपलक्षणत्वोपपत्तेश्च। न च द्वारत्वेन लक्षणपरत्वं द्वारिणोऽखण्डत्वाविरोधिवक्ष्यमाणरीत्या लक्षणात्प्रागेव सामान्यतो ज्ञाते स्वरूपमात्रे तस्य द्वारत्वायोगात् । नच लक्षणपरत्वं न हेतुः किन्त्वपरत्वेऽपि तत्प्रत्यायकत्वमात्रमिति वाच्यम , अलक्षणवाक्यस्यापि तात्पर्यभ्रमादिना लक्ष्यप्रत्यायकत्वसंभवेन व्यभिचारात् सखण्डवनादिलक्षणवाक्ये, 'किञ्च चन्द्रलक्षणम्' इत्यसाधारणधर्मप्रश्नोत्तरे प्रकृष्टादिवाक्ये च व्यभिचाराच्च। नचाखण्डलक्षणवाक्यत्वं हेतुः, अप्रसिद्धेः। नच धर्मे पृष्टे स्वरूपमात्रं वक्तुमुचितम्। नच प्रश्नविशेष्यविषयकत्वमुत्तरत्वे तन्त्रं, किन्तु तन्मूलसंशयविरोधित्वम्। असिद्धिश्च, सत्यत्वज्ञानत्वादेः परापरजातित्वे तस्याब्रह्मण्यपि सत्त्वेनातिव्याप्तिः, अजातित्वेऽपि ब्रह्मण्यपि तस्य तात्त्विकस्य धर्मिज्ञानाबाध्यस्य चासम्भवात् । अतात्त्विकस्य व्यावहारिकस्य चानात्मन्यपि सत्त्वात्। बाधश्च, धर्मिज्ञानाधीनसप्रकारकसंशयादिनिवर्तकं मोक्षहेतु सप्रकारकं ब्रह्मज्ञानं प्रति साधनत्वेन वेदान्तविचारविधानान्यथानुपपत्त्या वेदान्तवाक्ये साध्यानिश्चयात्। सत्प्रतिपक्षत्वञ्च सत्यादिवाक्यतात्पर्यविषयः संसृष्टरूपः संसर्गरूपो वा प्रमाणवाक्यतात्पर्यविषयत्वात्। सम्मतवत् , वेदान्तजन्या प्रमा सप्रकारिका विचारजन्यज्ञानत्वात् संशयविरोधित्वाच्च कर्मकाण्डविचारजन्यज्ञानवत् , वेदान्तजन्या प्रमा ब्रह्मनिष्ठप्रकारविषयिका ब्रह्मधर्मिकसंशयविरोधित्वात् ब्रह्मविचारजन्यज्ञानत्वाच्च कर्मकाण्डविचारजन्यनिश्चयवदित्यादिना प्रतिरोधात्। दृष्टान्तस्य साधनवैकल्यम्। तथाहि प्रकृष्टप्रकाशश्चन्द्रः इत्यादिवाक्यस्याखण्डार्थत्वं न तावन्मुख्यया वृत्त्या, लक्षणाऽपि न तावत् , 'गङ्गायां घोषः' इत्यादाविवान्वयानुपपत्त्या चाप्रकाशेन सम्बन्धस्य प्र-

कृष्टत्वप्रकाशत्वयोर्वा सत्त्वात् प्रकृष्टेन गुणद्रव्यरूपेणचन्द्रेणापि दृ(?)-
ष्टीः प्रवेशाय इत्यादाविवतात्पर्यानुपपत्त्या कश्चन्द्र इति स्वरूपमात्रस्य
पृष्टत्वादिति वाच्यम्, अस्ति कश्चिच्चन्द्रशब्दस्यार्थः इत्यज्ञाने ध-
र्मिज्ञानसाध्याया बुभुत्सायाः सन्देहस्य चानुपपत्तेः चन्द्रशब्दस्य
प्रातिपदिकत्वानिश्चयेन सुविभक्तिप्रयोगायोगाच्च। चन्द्र इत्य-
नूद्य कः ? इति प्रश्नायोगाच्च। नह्यज्ञातमनुवादार्हम्। असंकीर्णं च-
न्द्रस्वरूपं न ज्ञातमिति चेत् ? न, चन्द्रस्वरूपद्वयाभावात्। तदेव
स्वरूपमसङ्कीर्णत्वेन न ज्ञातमिति चेत् ? न, असङ्कीर्णत्वस्य व्याव-
र्त्तकवैशेष्याद्वृत्तिविशिष्ययोरन्यतररूपत्वेन प्रश्नस्य विशिष्टपरत्वा-
पातात्। एवञ्च सामान्यतोऽपि न ज्ञातो धर्मी चन्द्रो यदा तदा न
बुभुत्सा न सन्देहो नानुवादश्च युज्यते। तस्माच्चन्द्रस्यैवावान्तरभे-
दको धर्म एव हि दृ [ पृ ? ] ष्टः। तस्मात्प्रकृष्टादिवाक्यं नाखण्डगो-
चरम्। एवं प्रतिवचनस्य प्रकृष्टादिविशिष्टे तात्पर्याभावे तात्पर्यतो
यः कश्चिच्चन्द्र इत्येव बोधनात्। अतात्पर्यविषयस्य च प्रतीतस्य त्य-
क्तत्वात् वस्तुतो यस्य कस्यापि चन्द्रत्वं स्यात्। तात्पर्येऽखण्डोऽयं
चन्द्र इतिलक्षणलक्ष्यरूपोद्देश्यविधेयविभागाभावेन तात्पर्यतो यत्कि-
ञ्चिदित्येव बोधनात्। तेन बुभुत्सानिवृत्त्यभावात् कश्चन्द्र इति प्रश्नो-
त्तरं च न स्यात्, सर्वेषामपि वाक्यतात्पर्यजन्यज्ञानानां वस्तुगत्या
परस्परभिन्नतत्तत्प्रातिपदिकार्थविषयत्वेऽपि प्रकारभेदाभावेन तेन
तेन भिन्नभिन्नप्रकारकतत्तत्सन्देहनिवृत्तिश्च न स्यात, प्रकृष्टादिपद-
वैयर्थ्यं च स्यात। व्यावर्त्यभेदेन सार्थक्यमिति निरसिष्यते। एतेन—
प्रश्नोत्तरे तावच्चन्द्रप्रातिपदिकार्थमात्रविषये, प्रकृष्टादिविशेषणाश्र-
यभूता चासाधारणी विशेष्यव्यक्तिः चन्द्रप्रातिपदिकार्था न तु तद्वि-
शिष्टा प्रकृष्टप्रकाशश्चन्द्र इति सहप्रयोगाद्ययोगात्, विशेष्यव्यक्तिश्चा-
खण्डेति अखण्डार्थपरप्रश्नोत्तरे इति निरस्तम्। अस्या एवासाधा-
रणव्यक्तेर्व्यावर्त्तकादिवैशेष्यरूपेणासाधारण्येनाज्ञानेऽपि चन्द्रप्राति-
पदिकार्थत्वेनान्वयेऽप्युद्देश्यत्वावच्छेदकत्वेन विवक्षितत्वात् तद्वदेव
विशिष्टार्थत्वं दुर्वारम्। अस्ति च 'पृथिवी' इत्यादौ पृथिवीत्वस्य वि-
धेयेन पृथिवीशब्दार्थत्वेनान्वयः। नहि पृथिवीत्वं न पृथिवीप्रातिपदि-
कार्थः। सहप्रयोगस्तु पृथिवीशब्दस्य तच्छब्देन व्यवहर्तव्यतापर-
त्वात्। तस्माद्धर्मिणश्चन्द्रस्य सामान्यतो नक्षत्रादिव्यावर्त्तकव्यावृ-

त्तिरूपधर्मस्य घटादौ प्रागेव ज्ञातत्वात् विशिष्टविषये एव प्रश्नोत्तरे। तत्र यदि प्रष्टृव्यावृत्तिवैशिष्ट्यमेव साक्षाद्बुभुत्सितं तदा वक्तव्या वृत्तेरस्मादस्माच्च व्यावृत्त इति साक्षाज्जन्मशतेनापि दुर्बोधत्वात्। धूमे उक्ते अग्निमिव व्यावर्त्तक उक्ते व्यावृत्तिं ज्ञास्यतीति भावेन व्यावृत्तवैशिष्ट्यमेव तात्पर्यतः प्रतिपादयति। नह्यग्निबोधनार्थस्य 'धूमोऽस्ति' इति वाक्यस्य न धूमे तात्पर्यं, न वा यागाक्षेपकस्य यदाग्नेयादिवाक्यस्य न द्रव्यदेवतासम्बन्धे। यदि पृष्टैव व्यावृत्तिः, प्रतियोगितानन्त्यात् साक्षात्प्रष्टुं वक्तुं चाशक्येति ज्ञात्वा कश्चन्द्र इत्यनया वाचोभङ्ग्या कैर्विशेषणैर्विशिष्ट इति पृष्टं तदा तु सुतरां प्रश्नोत्तरे व्यावर्त्तकवैशिष्ट्यपरे इति न क्वाप्यखण्डार्थत्वम्। असाधारणधर्मरूपलक्षणप्रश्नपरो ह्ययं किंलक्षणः चन्द्र इत्यसाधारणधर्मविषयस्य कतमश्चन्द्र इतिजातिविषयस्य अनयोः कतरश्चन्द्र इति गुणक्रियाजातिभिः। पृथक्करणरूपधर्मानिर्धारणविषयस्य च प्रश्नस्य उत्तर इवात्रापि प्रतिवचने लक्षणोक्तेः प्रश्नोऽपि प्रकृष्टो वा प्रकाशो वेत्यादिधर्मविषयविकल्पसूचकः, किंशब्दप्रयोगाच्च। एतेन प्रश्ने धर्मवाचिपदं नेति निरस्तम्। यथात्वे चन्द्रधर्मस्यैव लक्षणीयत्वापत्त्या तस्यानपेक्षितत्वात् चन्द्रप्रातिपदिकार्थस्य सामान्यतो ज्ञातत्वेन तत्र बुभुत्सितत्वायोगात् लक्षणया वा प्रश्नस्थचन्द्रपदस्यैव चन्द्रासाधारणधर्मपरत्वस्य कल्प्यत्वाच्च।

तथैव द्वितीयानुमानमपि अप्रसिद्धविशेषणत्वबाधसत्प्रतिपक्षत्वदृष्टान्तसाध्यवैकल्यादिदोषात् प्रकृष्टादिवाक्योक्तरीत्या सत्यादिवाक्ये बुभुत्साद्यनुपपत्त्या ब्रह्मस्वरूपमात्रप्रश्नोत्तरत्वस्यासिद्धेश्च। इह च कश्चन्द्रवत् क्लृप्तस्य प्रश्नस्याभावात् कल्प्यस्य च क्लृप्तोत्तरानुसारेण धर्मविषयकस्यैव क्लृप्तत्वाच्च, "कतम आत्मेति" इत्यत्र कतरः स आत्मेत्यत्र च त्वंपदार्थप्रश्ने "वा बहूनां जातिपरिप्रश्ने डतमच्" ( पा० सू० ५-३-९३ ) "द्वयोरेकस्य निर्धारणे डतरच्" ( पा० सू० ५-३-९२ ) इति सूत्राभ्यां जात्यर्थकतमादिशब्दप्रयोगेन तत्प्रतिवचने "योऽयं विज्ञानमयः" इत्यादौ पक्षत्वेन त्वदभिमते हेतोरसिद्धेश्च। किञ्च पूर्वस्याप्युत्तरस्य प्रष्टृनिर्धारितप्रश्नधर्मनिष्ठानिर्धारितैकैकपरत्वात् विरुद्धो हेतुः। यदि चोत्तरजन्यं ज्ञानं निष्प्रकारकं स्यात् तेन सप्रकारकसन्देहनिवृत्तिर्न स्यात्। यदि चोत्तरं प्रश्नादधि-

कविषयं न स्यात् तद्युत्तरमेव न स्यात्। अन्यथा प्रश्न एवोत्तरं स्यात्। 'किं करोति' 'किमानेयम्' इत्यादिप्रश्नोत्तरेषु 'अध्ययनं करोति' 'गामानय'इत्यादिषु व्यभिचाराच्च। न हि तान्यपि अध्ययन-त्वगोत्वादित्यागेन लक्षणया कर्मादिपराणि। एतेन सत्यादिवाक्या-र्थः ब्रह्मप्रातिपदिकार्थमात्रं तन्मात्रप्रश्नोत्तरवाक्यार्थत्वादिति न्याय-दीपावल्युक्तं व्यतिरेक्यनुमानं निरस्तम्।

किञ्च एकप्रातिपदिकार्थप्रश्नोत्तरत्वेन कथमखण्डार्थत्वम्?

स्वार्थो द्रव्यं तथा लिङ्गं सख्या कर्मादयोऽपि च।
नामार्थपञ्चकं प्राहुराद्यं त्रिकमथापरे॥

इति वैयाकरणमते त्वदेकदेशिभिः प्रभाकरादिभिश्च स्वीकृता-न्विताभिधानमतेऽभिहितान्वयपक्षेऽपि जातिविशिष्टायां व्यक्तौ शक्तिरिति तार्किकमते च प्रातिपदिकार्थस्यैव विशिष्टत्वात् जातावेव शक्तिर्व्यक्तिस्तु लक्ष्येति भट्टानां तव च मते ब्रह्मप्रातिपदिकस्य यौ-गिकत्वेन तदर्थस्य विशिष्टत्वात्। ननु सत्यादीनां विशिष्टविषयत्वे-ऽपि लक्षणयाऽखण्डार्थपरत्वाभ्युपगमान्नोक्तदोषयोग इति चेत्? न, लक्षणाया एवानुपपन्नत्वात्। तथाहि, का वाऽत्र लक्षणा जहत्स्वार्था-ऽजहत्स्वार्था भागत्यागलक्षणा वेति? नाद्या, गङ्गायां घोष इति यथा शक्यत्यागेनागङ्गारूपस्तीरादिवाक्यार्थः। तथा सत्यादिपदार्थ-त्यागेनाशक्यरूपोऽसत्यजडपरिच्छिन्नरूपो वाक्यार्थः स्यात्। नापि द्वितीया, शक्यवद्विशिष्टार्थत्वापत्तेः। नापि चरमा, विशेषणत्यागेन विशेष्यमात्राङ्गीकारे सत्यादीनां को वार्थः इत्याद्यपि ह्यनिश्चयात्। सत्यत्वादीनां त्यागेऽपि सच्चिदपरिच्छिन्नं ब्रह्मेति त्रैविध्यस्यावश्य-म्भावात्, शब्दैकांशार्थाङ्गीकारे सर्वांशवाचकतासम्बन्धाभावेऽपि तत्तदंशमात्रवाचकतासम्बन्धस्याप्यकामतोऽभ्युपगमापत्तेश्च, सर्व-पदानामेकार्थपरत्वे पर्यायत्वापत्तेश्च, तथात्वाभ्युपगमे एकपदेनैवा-र्थसिद्धौ पदान्तरवैयर्थ्याच्च।

ननु कुम्भाद्यनुगतसत्ता परजातिः, अन्तःकरणवृत्त्युपधानलब्ध-भेदचिदानन्दविशेषानुगतज्ञानत्वानन्दत्वे चापरजाती, एवं सत्यादि-शब्दाना लक्ष्यार्थाभेदेऽपि क्रमेणोक्तजातिवाचित्वान्न पर्यायतेति क-ल्पतरूक्तेरिति चेत्? न, कुम्भाद्यनुगतसत्ताया ब्रह्मलक्षणत्वायो-गात्, मिथ्यासत्यानुगतसत्तासामान्यभावाच्च, तयातद्व्यावृत्तिसिद्धे-

श्च, कालत्रयाबाध्यत्वरूपं पारमार्थिकं सत्त्वं ब्रह्मणि श्रौतमिति त्वन्मतभङ्गाच्च । धर्मिसमसत्ताकभेदं विनौपाधिकभेदमात्रेणाकाशत्वादेरिव ज्ञानत्वादेरपि जातित्वायोगाच्च, योगे च ज्ञानत्वादेर्धर्मिसमसत्ताकभेदवदुपहितवृत्तित्वेन शुद्धलक्षणत्वायोगात । एतेन सत्त्वादिविशिष्टशबलब्रह्मवाचिनां सत्यादिशब्दानां शुद्धे ब्रह्मणि लक्षणया न (१) पर्यायत्वमिति निरस्तम् । अनृतास्वप्रकाशपरिच्छिन्नरूपे शबले सत्यत्वादेरयोगात् । योगे वा तस्यैवानृतादि स्यान्न तु शुद्धस्य तस्मात्सत्यत्वादीनां शुद्धादन्यत्रासम्भवात् सत्यादिवाक्यस्य लक्षणयाऽखण्डार्थत्वे च शुद्धे तदसिद्धेः पर्यायत्वं दुर्वारम् पदान्तरवैयर्थ्यं च ।

किञ्च सत्यादिलक्ष्यं वस्तु पदान्तरवाच्यं न वा ? आद्ये सविशेषत्वापत्तिः । द्वितीये लक्ष्यत्वमेव न स्यात् । लक्ष्यत्ववाच्यत्वयोः सामानाधिकरण्यनियमात् । यत्र लक्ष्यत्वं तत्र वाच्यत्वं गङ्गायां घोष इत्यत्र तीरे यथोभयोः सत्त्वं, यत्र वाच्यत्वं नास्ति तत्र लक्ष्यत्वमपि नास्ति गगनकुसुमवदित्यन्वयव्यतिरेकाभ्यां लक्षणासिद्धेश्च ।

ननु सत्यादिशब्दा असत्त्वादिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्तीति चेत् ? न, ब्रह्मस्वरूपमात्रस्य श्रुतिं विनाऽपि प्रागेवाविद्याद्यध्यासाधिष्ठानत्वादिना ज्ञातस्य पुनरपि "ब्रह्मविदाप्नोति परम्" इति पूर्वोक्तवाक्येन सामान्यतोऽत्र च सत्यादिशब्दैः सत्यत्वादिविशिष्टतया च ज्ञातत्वेन ज्ञातस्य व्यावृत्तिज्ञानासाध्यत्वात् व्यावृत्तिज्ञानस्यैव च धर्मिज्ञानसाध्यत्वेन वैपरीत्यापाताच्च । किञ्च व्यावृत्तयः सत्या वा मिथ्या वा ? नाद्यः, व्यावर्त्तकानामपि सत्त्वं स्यात् व्यावहारिकैर्व्यावर्त्तकैः पारमार्थिकव्यावृत्त्यसिद्धेः । किञ्च तासां ब्रह्मपदेनैव तत्सिद्धेरितरवैयर्थ्यं व्यावृत्तधर्माणामपि सत्त्वं ब्रह्माभिन्नत्वं च स्यात् अविशेषात् । एवं व्यावृत्तीनामन्योन्यमभेदे सत्येकपदेनैव ज्ञानादेरपि व्यावृत्तिसिद्धेर्ज्ञानादिपदवैयर्थ्यं तासां ब्रह्मणा परस्परं भेदे चाद्वैतहानिप्रसङ्गात् । नान्त्यः, शुक्तेः शुक्तितो व्यावृत्तेर्मिथ्यात्वे शुक्तित्वस्य शुक्तिसमसत्ताकत्ववदनृतव्यावृत्तेर्मिथ्यात्वेऽनृतस्य ब्रह्मसमसत्ताकत्वापातात, तत्त्वजिज्ञासुं मुमुक्षुं प्रति मिथ्याबोधनायोगाच्च ।

---

(१) 'तात्पर्यायत्वमिति' आदर्शे ।

किञ्च विशेष्यमात्रपरत्वं वाक्यस्योद्देश्यविधेय(१)भावेन यत्किञ्चिदित्येव बोधनाद्ब्रह्मबुभुत्सानिवृत्तभावप्रसङ्गात्। सामान्यस्य पूर्वमेव प्राप्तत्वात् विशेषस्यानपगमाच्च।

किञ्चिद्विधीयतेऽनूद्य वाक्येनेति सतां स्थितिः।

सत्यं किं विधीयते (?)

अज्ञातं बोध्यते किञ्चित् वाक्येनेति सतां स्थितिः॥

सत्यज्ञानादिशब्दैस्तु किमज्ञानं प्रबोध्यते।

इति वचनाच्च। तस्मात्सत्यादिवाक्यानां नाखण्डार्थत्वमितिसिद्धम्।

तत्त्वमस्यादिवाक्यस्याखण्डार्थत्वानुमानमप्ययुक्तमेव उक्ताप्रसिद्धत्व विशेषणत्व बाधप्रतिरोधाप्रयोजकत्व प्रतिकूलपराहतत्वादिदोषात्, उक्तरीत्याऽन्यहेतोरसिद्धेश्च, उभयत्रापि दृष्टान्तस्य साध्यवैकल्याच्च। ननु सोऽयमित्यत्र किं तद्देशकालादिविशिष्टस्यैतद्देशकालादिवैशिष्ट्यं बोध्यते एतद्देशकालादिविशिष्टस्य तद्देशकालादिवैशिष्ट्यं विशिष्टद्वयैक्यं वा? नाद्यः, एतत्कालादिविशिष्टस्य प्रत्यक्षत्वे नानुपदेश्यत्वात् तत्कालादेरपीदानीं सत्त्वापत्तेश्च। न द्वितीयः, एतत्कालादेस्तदा सत्त्वापातात्। न चरमः, विशेषभेदे विशिष्टाभेदायोगात्। विशिष्टं हि यदि विशेषणविशेष्यसम्बन्धरूपम्, तदा विशेषणभेदेन। यदि तु पदार्थान्तरम्, तदापि विशेष्यभेदेनैव विशेषणभेदेनापि तद्भेद आवश्यकः। तस्मात्सोऽयमित्यादि वाक्यं लक्षणयाऽखण्डार्थपरम्। तद्वत् तत्त्वमस्यादिवाक्येऽप्यनुपपत्तिमनुसन्धाय लक्षणयाऽखण्डार्थपरत्वं बोध्यमिति चेत्? न, अस्तु तावदनुभवकालसम्बन्ध एव तत्ता। तथापि बाल्ययौवनयोरिव श्यामरक्तरूपयोरिव तदेतद्देशकालसम्बन्धरूपयोस्तत्तेदम। तयोः परस्परमनन्वयेऽपि एकविशेषणविशिष्टे इतरस्यावृत्तावपि एकविशेष्यवर्त्तित्वं तावदस्ति, कालद्वयासम्बन्धिपदार्थानां क्षणिकत्वापातात्, देशद्वयसम्बन्धस्यापि कालभेदेनानुभवात्। सोऽयमिति पदद्वयं च तत्तेदन्तयोरेकवर्त्तित्वबोधने शक्तं समानाधिकरणत्वात्। भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। नच विशेष्यस्य तत्तेदन्तान्वयपरमपीदं वाक्यं विशिष्टस्य तदन्वयपरं नेत्येतावताऽखण्डार्थत्वं, नीलमुत्पलमित्यादेरखण्डा-

(१) 'उद्देशविधेयविभावेन' आदर्शे।

र्थत्वापातात् । एवञ्च कालद्वयेन योगस्य क्रमेण स्थायिवस्तुनि नैल्यरक्तत्ववत् सत्त्वा(१)त्तदुक्तो का विरुद्धता ?

विशेष्यधर्मसंसर्गपरं चापि विशेषते ।
तत्परत्वेऽत्यखण्डार्थं स्याच्चेत सर्वं तथा भवेत् ॥

एतेन विशेष्यस्य कालद्वयसम्बन्धेनैव क्षणिकत्वानापत्तेर्विशिष्टस्य तत्संभा[वन]यापि विशेष्य एव कालद्वयसम्बन्धोक्तेः। नच तत्ताया अतीतत्वमात्रेण तत्प[द]स्य लक्षणा, घटो नष्ट इत्यादाविवातीततत्तारूपस्वार्थात्यागात् । अन्यथा तत्तादेरतात्पर्यविषयत्वेन सोऽयमित्यनेन देवदत्तस्य कालद्वयसम्बन्धो न सिद्ध्येत् । तस्मादेकविशेष[ण]विशिष्टे विशेषणान्तरान्वयाबोधकमपीदं वाक्यं विशेषस्य क्रमिकधर्मद्वयान्वयपरत्वात् सखण्डार्थत्वम् । त्वदुपन्यस्ते पक्षत्रयेऽपि न दोषः, तत्तादेरतीतत्वेऽपि पदेऽन्वततया ज्ञात एव तात्पर्यविषयभूतेतरान्वयधीस्तत्स्वरूपस्य विशेषणत्वस्य सम्भवात् । नच विधेयान्वय्येव विशेषणं, शब्दोनित्यादौ शब्दत्वादाव(२)व्याप्तेः । नापि विधेयान्वयकाले सदेव विशेषणं, दण्डी भविष्यति दण्डी नास्ति इत्यादावव्याप्तेः गृहे नष्टे काकादावतिव्याप्तेश्च । नापि विधेयान्वयाप्रतियोगितावच्छेदकं वा स्वप्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकं वा विशेषणं, अवच्छेदकान्यूनानधिकदेशकालरूपत्वे तस्य सास्नादिमान् गौरित्यादिषु लक्ष्यत्वावच्छेदकरूपविशेषणेषु सत्त्वेऽपि गौः शुक्ला इत्यादावव्याप्तेः । तस्मात्पक्षत्रयेऽपि न दोषः । किञ्च नानेन देवदत्तस्वरूपमात्रं बोध्यते तस्य प्रत्यक्षत्वात् । किन्तु ऐक्यादिविशेषितमेव । अपि च सोऽयं देवदत्त इति प्रत्यक्षप्रत्यभिज्ञा तावन्नाखण्डार्थविषया, तत्र शब्दवृत्तेर्लक्षणाया अयोगात् , तत्तेदन्तादेरभेदस्य च प्रकारस्योल्लेखानुभवाच्च । तदनुल्लेखे प्रत्यभिज्ञाया अभिज्ञातो विशेषो न स्यात् । तथा च शाब्दप्रत्यभिज्ञावगतस्यैवापरं प्रति बोधनात् तस्माद्दुष्परिहरं साध्यवैकल्यम् । किञ्च तत्त्वमसीत्यस्याभेदविशिष्टे तदुपलक्षिते वा तात्पर्यं चेत् ? उक्तरीत्याऽभेदरूपसंसर्गबोधनात् सखण्डार्थत्वं, चिन्मात्रस्य चिन्मात्रेणाभेदबोधनेन इष्टापत्तिरप्रसक्तनिषेधश्च । तत्पदादिवाच्यसार्वज्ञाद्युपल-

(१) 'तदुक्तो का विरु' आदर्शे ।
(२) शब्दो नित्यः शब्दत्वात् इत्यत्र शब्दत्वेऽव्याप्तेरिति तदर्थः ।

क्षिताभेदबोधने तु सखण्डार्थत्वं सार्वज्ञादेः प्रकारत्वेनानुप्रवेशात् । चैतन्यमात्रपरत्वं चेत्? तस्य स्वप्रकाशस्य नित्यसिद्धतयोपदेशवैयर्थ्यं, वाक्यात्प्राक् चैतन्याज्ञाने उक्तरीत्या बुभुत्सा च न स्यात् "सामान्ये ज्ञाते विशेषे जिज्ञासा" इति न्यायात् । तस्या धर्मिज्ञानसाध्यत्वात् । भेदभ्रमश्च न स्यात् अधिष्ठानज्ञानाभावात् । महावाक्येन भेदभ्रान्तिनिवृत्तिश्च न स्यात् भ्रमकालज्ञाताधिष्ठानादधिकाबोधनात् । महावाक्यस्यावान्तरवाक्येन गतार्थत्वं च न स्यात् तत्पदार्थबोधकेन 'सत्यं ज्ञानम्' इत्यादिना त्वंपदार्थशोधकेन "योऽयं विज्ञानमयः" इत्यादिना चावान्तरवाक्येन लक्षणया शुद्धचैतन्यबोधनात् । महावाक्य एवानेकपदवैयर्थ्यं च स्यात् एकेनैव पदेन लक्षणशुद्धबोधनात् वदता भेदस्य तेनैव पदेन बोधकत्वात् (?) ।

अपि च सोऽयं देवदत्त इतिवस्वदाभमतभागत्यागलक्षणयाऽपि तत्वमस्यादिवाक्यस्याखण्डार्थत्वं दुर्निरूप्यमेव, दृष्टान्तवैषम्यात् । तथापि सोऽयं देवदत्त इति दृष्टान्ते तत्तेदन्तापदार्थयोर्देशकालसम्बन्धयोरितरेतरविरुद्धयोरनित्यत्वेन हेयत्वं पिण्डमात्रस्य च शक्यैकदेशस्य रूपाद्यनेकविशेषवत्वात् पिण्डशब्दवाच्यत्वात् प्रत्यक्षप्रमाणविषयत्वाच्चोपादेयत्वं हेयोपादेययोरुभयभागयोः कथञ्चित् सम्भवाद् भागत्यागलक्षणा कल्प्यते । प्रकृते तु धर्मधर्मिणोः स्वाभाविकसम्बन्धस्य श्रवणात् "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः सत्यकामः सत्यसङ्कल्पः सर्वकामा सर्वकर्मा सर्वलिङ्गः सर्वधर्मः सर्वरूपः पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" इति श्रुतिभ्यः "अविनाशी वा अरे आत्माऽनुच्छित्तिधर्मा नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यतेऽविनाशित्वात् नहि श्रोतुः श्रुतेः नहि मन्तुर्मतेः वा हि विज्ञातुर्विपरिलोपो विद्यतेऽविनाशित्वात्" इत्यादिश्रुतिभ्यश्च कथं हेयत्वं, तथैव लक्ष्यभागस्य च सर्वविशेषशून्यत्वात् अवाच्यत्वात्प्रमाणशून्यत्वाच्च कथमुपादेयत्वम्? एवं हेयोपादेययोर्भागयोरसिद्धया लक्षणाया असम्भवः । तत्वमस्यादिवाक्यं न लक्षणयाऽखण्डार्थपरं वाक्यत्वात् ज्योतिष्टोमादिवाक्यवत्, अखण्डार्थं न लक्षणावृत्तिविषयम् अवाच्यत्वात् । यन्नैवं तन्नैवं सोऽयं देवदत्त इति वाक्यार्थवदित्यनुमानाद् दृष्टान्तवैषम्यसिद्धिः ।

ननु धर्माणां श्रुतिविषयत्वेऽपि "केवलो निर्गुणश्च" इति निषेधश्रुतिप्राबल्याद्बाध इति चेत्? न, तदर्थस्य पूर्वमेवोक्तत्वात्। किञ्च नहि अत्यन्तादरेण यावदात्मवृत्तिधर्मान् स्वाभाविकत्वेन स्वयमेव प्रतिपाद्य भूयस्तन्निषेधे प्रवर्त्तितुं क्षमा सर्वज्ञा भगवती। अन्यथौन्मत्यप्रजल्पितमेव श्रुतिवचनं स्यात्। श्रुतेरनाप्तत्वप्रसङ्गात् भगवद्धर्माणां मोक्षहेतुत्वापरिच्छिन्नत्वादिप्रतिपादनाच्चापिनिषेधायोगः। तथाच तैत्तरीयाम्नायः "सैषा आनन्दस्य सीमा ॐ सा भवति" इत्युपक्रम्य मनुष्यानन्दप्रभृतिचतुर्मुखानन्दावसानमुत्तरोत्तरशतगुणानन्दं प्रपञ्च्य तेषु परिच्छिन्नत्वं परिच्छिन्नाश्रयकत्वं च निर्णीय—

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।
आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चन॥

इति मन्त्रेण आनन्दलक्षणैर्गुणस्यापरिच्छिन्नत्वं भवनिवृत्तिरूपमोक्षहेतुत्वं च प्रतिपादितम्। तथा भूतगुणस्यापि तुच्छत्वयोगे मोक्षविधायकश्रुतेर्बाधः कथं नालोच्यते? स्वाभाविकत्वात्। अत एव तथा ब्रह्मधर्मा अपि निषेधगन्धसम्बन्धानर्हाः "नैषा मतिस्तर्केणापनेया" इति श्रुतेः "तर्काप्रतिष्ठानात्" इति सूत्रात्,

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्।

इति स्मृतेश्च श्रुतिनिर्मूलतर्कस्यानादरत्वावगमात्। किञ्च तत्त्वमस्यादिवाक्यलक्ष्यं वस्तु पदान्तरवाच्यम्। न वा? नाद्यः, द्वैतापत्तिप्रसक्तेः, अवाच्यत्वसिद्धान्तभङ्गाच्च। नाप्यन्त्यः, अप्रमाणकत्वेन तुच्छत्वात् तत्त्वमस्यादिलक्षितं वस्तु मिथ्या अवाच्यत्वात् शशशृङ्गवत्, यन्नैवं तन्नैवं सर्वज्ञब्रह्मवदित्यनुमानात्। न च तस्यापि लक्ष्यत्वान्नोक्तदोषावकाश इति, अनवस्थानात्। किञ्च सम्बन्धाभावादपि लक्षणा दुर्निरूप्या। शक्यसम्बन्धो लक्षणेति, अत्र को वा सम्बन्ध इति वक्तव्यम्। नच यद्यपि संयोगसम्बन्धादेरत्र निर्विशेषेऽनुपपत्तिरितरथा द्वैतापत्त्या सिद्धान्तभङ्गस्तथापि शाखाचन्द्रन्यायेन कल्पितसम्बन्धाभ्युपगमात् लक्षणासिद्धिरिति वाच्यं, दृष्टान्तवैषम्यात्। चन्द्रशाखयोः सम्बन्धस्य कल्पितत्वोक्तेः बालभाषितत्वात्। तत्र चन्द्रशाखयोः सम्बन्धिनोः सविशेषत्वाच्च। तत्सम्बन्धस्यापि चन्द्रकरनिकरैः शाखया सह प्रत्यक्षेणैव सिद्ध्या

तत्र कल्पितत्वभावनां ह्यनुन्मत्तः को वा कुर्यात्। दार्ष्टान्तिके तु तयोः सम्बन्धिनोः सर्वप्रमाणाविषयतया तत्र सम्बन्धकल्पनाया गगनकुसुमायमानत्वाद् दृष्टान्तवैषम्यमिति लक्षणानुपपत्तेस्तादवस्थ्यमिति संक्षेपः।

किञ्च नापि ब्रह्मस्वरूपेणावस्थितिर्मोक्षः, अपि तु तद्भावापत्तिरेव "ब्रह्मविदाप्नोति परं निरञ्जनः परमं साम्यमुपैति तन्महिमानमिति वीतशोकः महिमानमात्मनः" इत्यादि श्रुतेः। "मम साधर्म्यमागताः" "पूता मद्भावमागताः" "मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते" इत्यादि स्मृतिभ्यश्च। तद्विशेषः पूर्वमेव विस्तृतः "आत्मभावमनुभूतिरूपिणो" (श्रीकृष्णस्त० श्लो०१३) इति श्लोकव्याख्यायाम्। तत्सिद्धं परमते युक्तीनां शैथिल्यमित्यलं कुमतिपरिकल्पितकुतर्कनिरासैरिति।

अथान्यदपि तत्प्रक्रियाविशेषमनूद्य निराकरोति—*सत्त्वयापीति* सत्ता तावत्त्रिविधा पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति। तत्र पारमार्थिकं सद्ब्रह्म, व्यावहारिकं सत् आकाशादिरूपं जगत्, प्रातिभासिकं सत् शुक्तिरूप्यादीति तेषां राद्धान्तः। तदसम्यगित्याह—*सत्त्वयापीति*। विभुर्वेदः सत्त्वयापि त्रैविध्येन कल्पमानयापि मानदो व्यवस्थया सन्मानकारको न भवतीति शेषः। यद्वा, मानदः प्रमाणदो व्यवस्थानिर्णयसाधको(१) न भवति। तथाहि, स्वप्नशुक्तौ स्वाप्नस्वप्नशुक्तौ वाऽध्यस्तरूप्यादेरुपसङ्ग्रहाय प्रातिभासिकादपि निकृष्टस्य निकृष्टतमस्य च पञ्चमप्रकारस्याऽव्यावहारिकस्य अज्ञानध्वंसस्य चोपसङ्ग्रहाय, अपारमार्थिकस्य व्यावहारिकादप्युत्कृष्टस्य सत्त्वस्य च वाच्यत्वेन त्रैविध्यायोगात्। किञ्चायं विभागो न तात्त्विकः ब्रह्मैव तात्त्विकमित्यस्यभङ्गात्। नाप्यतात्त्विकः, तात्त्विकस्य ब्रह्मणोऽतात्त्विकाच्छुक्ति(२) रूप्यादिव बाधगम्यस्य विभागस्य तात्त्विकत्वावश्यम्भावात्। अन्यथा विभागश्रुतेरतत्त्वावेदकत्वं स्यात्। एवञ्चायं विभागः सत्यश्चेत्? अपसिद्धान्तापत्तेः। मिथ्या चेत्, इष्टापत्तिः त्वयैव स्वोक्तदूषणात्। 'व्यावहारिकः सत्यो न वेति? नाद्यः, अपसिद्धान्तात्। नान्त्यः, ममेष्टापत्तिः, त्वयैव दूषणात्' इति समानं

(१) 'साधकम्' आदर्शे।
(२) 'रूप्यादिवत् बाध' आदर्शे।

सम्भवति । विश्वमिथ्यात्वब्रह्मनिर्विशेषत्वादावपि उक्तरीत्या विकल्प्य दूषणम् ।

किञ्च किमत्र परमार्थं सदेव सदितरतद्रूपं सद्विलक्षणमेव सत्त्वेन भाति (१) बाधविलम्बाभ्यां सद्भेद इति विवक्षितं किं सत्ये वाऽवान्तरभेद इति विवेचनीयम् । नाद्यः, त्वन्मते रूप्याभावे रूप्यधिय इव सत्त्वाभावे सत्त्वबुद्धेरयोगात् उपपत्त्यादौ लाघवेन कदाचित् सत्त्वस्यैव तन्त्रतया (२) तद्धीनस्य रूप्यादेरुत्पत्त्यादेरयोगाच्च । व्यावहारिके प्रातिभासिकादर्थगतविशेषाभावे तत्रार्थक्रियादेः श्रुतीनां व्यावहारिकविषयत्वेन प्रामाण्यस्य वाऽयोगाच्च । दीर्घभ्रान्तिहेतुत्वे नभोनैल्यभ्रमहेतोरिवाप्रामाण्यातिशय एव स्यात् । व्यावहारिकश्रुतयोऽतिशयाप्रामाण्यकाः दीर्घभ्रमहेतुत्वात नभोनैल्यभ्रमहेतुवदितिप्रयोगात् । नान्त्यः, आरोपितानारोपितानुगतसामान्याभावात् । भावे च भेदप्रसङ्गस्य दुर्वारत्वात्, सिद्धान्तभङ्गाच्च, व्यावहारिकस्य चानारोपितानुगतविषयत्वेऽस्मन्मतेप्रवेशप्रसङ्गात्, इष्टापत्तेश्च ।

किञ्च पारमार्थिकापारमार्थिकयोर्न तावद्बाध्यत्वाबाध्यत्वाभ्यां भेदः, अध्यस्तेऽपि क्वचित्स्वरूपाबाध्यस्य ब्रह्मण्यपि आकारबाधस्य दर्शनात्, जगद्बाधस्य च सप्रकारकत्वे तस्यैव प्रकारस्य बाध्यत्वापातात्, निष्प्रकारकत्वे च बाधकत्वायोगात् । व्यावहारिकप्रातिभासिकयोरपि तावन्मायिकत्वाविद्यकत्वाभ्यां भेद इति न वाच्यं, मायाविद्ययोस्तदभावात् । मायिकस्यैन्द्रजालिकादेः प्रातिभासिकत्वाच्च, असाधारणस्याविद्यकस्य दुःखादेर्व्यावहारिकत्वाच्च, त्वयैव मायाविद्याभेदस्य निराकरणाच्च । नाप्यर्थक्रियाकारित्वतदभावाभ्याम् आदानादिव्यवहारनिर्वाहकतदभावाभ्यां वा भेदः, अर्थगतविशेषाभावेन तदयोगात, स्वाप्नेऽपि कुम्भादौ स्वाप्नजलाहरणाद्यर्थक्रियाकारित्वादेः सत्त्वाच्च । व्यावहारिकस्य विवक्षायां चात्माश्रयदोषप्रसङ्गात् नापि ब्रह्मधीबाध्यत्व तदन्यधीबाध्यत्वाभ्यां भेदः, त्वन्मते रूप्यादेरपि शुक्त्यवच्छिन्नब्रह्मधीबाध्यत्वात् । (३) नापि ब्रह्मण्यध्यस्तस्य (४) प्रातिभासिकस्य क्षणिकत्वादेरपि ब्रह्मप्रमा-

---

(१) 'बाधविलम्बाधविलम्बाभ्याम्' आदर्शे । (२) 'त्वद्धीनस्य' आदर्शे ।
(३) 'नापि' नास्ति आदर्शे । (४) 'भ्रान्तिभासिकस्य' आदर्शे ।

बाध्यत्वतदन्यप्रमाबाध्यत्वाभ्यां भेदः, त्वन्मते ब्रह्मज्ञानस्यैव प्रमात्वात्। नापि प्रमाबाध्यत्वभ्रमबाध्यत्वाभ्यां भेदः,भ्रान्तिबाध्यत्वस्य ब्रह्मण्यपि सत्त्वात् । नापि शुद्धब्रह्मधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां भेदः, शुद्धशब्देन भ्रान्तिकाल ज्ञानाधिष्ठानभूतविशेषमात्रं वा तत्कालाज्ञातद्वितीयाभावादिविशिष्टं तदुपलक्षितम् ? नाद्यः, तस्य भ्रमसाधकत्वाङ्गीकारेण बाधकत्वायोगात्। अन्यथा भ्रान्तिरेव न स्यात् विरोधिनोरेकत्रावस्थानासम्भवात् तावन्मात्रस्य सदा सर्वत्र भासमानत्वाभ्युपगमाच्च। न द्वितीयः,वेदान्तानां सखण्डार्थत्वापत्त्याऽखण्डार्थत्वहानिप्रसङ्गात्, द्वितीयाभावादेः पारमार्थिकत्वापाताच्च । एतेन महावाक्यजन्यधीबाध्यत्वतदन्यबाध्यत्वाभ्यां वा परमधीबाध्यत्वतदन्यधीबाध्यत्वाभ्यां भेद इत्यपि निरस्तम् । महावाक्यजन्यस्य चरमस्य चाखण्डार्थवेदान्तजन्यतया निष्प्रकारकत्वेन बाधकत्वायोगात्, सप्रकारकत्वं च तत्प्रकारस्य तात्त्विकत्वापत्तेः । अत एव निष्प्रकारकधीबाध्यत्वसप्रकारकधीबाध्यत्वाभ्यामपि न भेदः। नापि पारमार्थिकविषयधीबाध्यत्व-व्यावहारिकविषयधीबाध्यत्वाभ्यां भेदः, अन्योन्याश्रयात् । नाप्यन्योन्येतरेतरत्वाभ्यां भेदः, भेदकाभावे इतरेतरत्वस्यैवायोगात् अन्योन्याश्रयाच्च । तस्माज्जगतः सत्यत्वाद् भगवत्तन्त्रसत्तावत्त्वं ब्रह्मणश्च स्वतन्त्रसत्ताश्रयत्वमिति सिद्धान्तस्यैव श्रौतत्वात् वरीयस्त्वम् । तच्च पूर्वमेवविस्तृतम् । "सदेव सौम्येदमग्र आसीत्" "एतदक्षरस्य प्रशासने गार्गिः सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "भीषास्माद्वातः पवते भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" "यदासीत्तदधीनमासीत्"

ज्ञः कालकालो गुणिसर्वविद्यः प्रधानक्षेत्रज्ञपतिर्गुणेशः ।
संसारबन्धस्थितिमोक्षहेतुः सकारणं कारणाधिपाधिपः ॥

"नतुकश्चिज्जनिता न चाधिपः" इत्यादि श्रुतिभ्यः ।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरं । (भ०गी०अ०९श्लो०१०)

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
(भ०गी०अ०१०श्लो०८)

मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ।
(भ०गीअ०७श्लो०७)

"कालः कालयतामहं" (भ०गी०अ०१०श्लो०३०) "बुद्धिर्ज्ञानमसंमोह" इत्यारभ्य।

भवन्ति भावा भूतानां मत्त एव पृथग्विधाः।
(भ०गी०अ०१०श्लो०५)

इत्यादिश्रीमुखगीतेभ्यश्च सत्ताद्वैविध्यसिद्धेः सर्वप्रशास्तृत्वादिभिः श्रुतिस्मृत्युक्तालिङ्गैः श्रीपुरुषोत्तमस्य भगवतः परब्रह्मणो मुकुन्दस्य समष्टिबुद्धिनियन्तुः स्वतन्त्रसत्ताश्रयत्वं तत्प्रशासनार्हस्य चेतनाचेतनस्य जगतस्तत्प्रशास्यत्वादिभिः लिङ्गैः परतन्त्रसत्त्वाश्रयत्वमिति श्रुतिस्मृतीनां निर्गलितार्थः। अलं विस्तरेण ॥ १६ ॥

एतावता भगवत्स्वरूपतद्गुणादयो निरूपितास्तत्प्राप्तिसाधनं च सङ्ग्रहेण प्रतिपादितं, परमतनिरासश्च तद्दार्ढ्यार्थं सङ्ग्रहेणोक्तः, इदानीं मुक्तोपसृप्यं भगवदीयधाम निर्दिशति-*पारशून्यपरधामेति*। परस्य भावः पारम् आधिक्यं यच्छून्यं तत् परं च सर्वोत्कृष्टं साम्यरहितं ते धाम लोकमूर्द्ध्नि जयतीत्यन्वयः। ते तवाचिन्त्यानन्तस्वाभाविकस्वरूपगुणशक्तिकस्य श्रीपुरुषोत्तमस्य भगवतो रमाकान्तस्य धाम लोकं शास्त्रं तस्य शिरोभागे उपरि लोकमूर्द्ध्नि लोकानां ब्रह्मादीनां तद्ध्येयतया मूर्द्ध्नि मस्तके जयति स्वस्य सर्वत उत्कृष्टत्वमाविः कुर्वन्नास्ते इति। यद्वा, लोकानां चतुर्दशभुवनानां मूर्द्ध्नि सर्वेषामुपरि ततत्वात् प्रकृतिमण्डलाद्बहिः वर्त्तते। यद्वा, लोकमूर्द्ध्नि लोक्यतेऽनेनेति लोकं शास्त्रं तस्य शिरोभाग उपनिषद्भागो मूर्द्धा तस्मिन्प्रतिपाद्यतया जयतीत्यर्थः। अतिशयसाम्यरहितं श्रीवैकुण्ठाख्यं वेदशिरोभागे उपनिषत्कदम्बे प्रतिपाद्यतया प्रकाशते इति वाक्यार्थः। तदेव विशिनष्टि—*अद्भुतमिति*। अद्भुतत्वं नाम अवगतांशस्यापि सर्वलोकोत्तरतपश्चर्यावहत्वमिति, नित्यं प्रतिक्षणं तद्द्रष्टृभिरपूर्वत्वेन दृश्यमानामित्यर्थः। तत्र हेतुं वदन् निरतिशयत्वं व्यनक्ति-*चिद्घनमिति*। प्रकाशमूर्त्ति प्राकृतसम्बन्धास्पृष्टमाहात्म्यमित्यर्थः। अत्रापि हेतुमाह-*व्यापकं चेति*। चकारात्परिच्छिन्नवद्भासमानमपि व्यापकं परिच्छेदशून्यम्। उभयत्रापि हेतुप्रदर्शनायाह विशेषणद्वयेन--*परिखा सरिद्वरेति*। यस्य धाम्नः सरिद्वरा विरजा नदी परिखेति परिच्छिन्नवद्भासमानत्वे हेतुः। तथात्वेऽपि व्यापकत्वे हेतुमाह-*अचिन्त्यशक्तीति*।

अचिन्त्या इयतावच्छेदेन निरूपयितुमनर्हाः शक्तयो यस्य तत् अचिन्त्यशक्तिमत्त्वमेव सर्वविरोधपरिहरणमित्यर्थः। अथ विशेषान्तरमाह-*नवमङ्गलध्वनीति*। नवीना मङ्गलरूपा ध्वनयो यत्र तत्तथेति। तथाच श्रुतयः-

"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" "लोऽस्याध्यक्षः परमे व्योमन्" इत्यादयः।

योगियाज्ञवल्क्ये-

ओंकाररथमारुह्य मनः कृत्वा तु सारथिम्।
नरो ब्रह्मपदान्वेषी याति विष्णोः परं पदम्॥

*भारते वनपर्वणि—

यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवाम्।
अनादिनिधनं देवं प्रभुं नारायणं हरिम्॥
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते।
देवाश्च यं न पश्यन्ति दिव्यं तेजोमयं पदम्॥
अत्यर्कानलसन्दीप्तं स्थानं विष्णोर्महात्मनः।
स्वस्यैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः॥
यतयस्तत्र गच्छन्ति देवं नारायणं हरिम्।
वरेण तपसा युक्ता भाविताः कर्मभिः शुभैः॥
योगसिद्धामहात्मानस्तमोमोहविवर्जिताः।
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत॥
स्थानमेतन्महाराज ध्रुवमक्षयमव्ययम्।
ईश्वरस्य सदा ह्येतत्प्रमाणं च युधिष्ठिर॥

इत्यादिना सत्यलोकभिन्नत्व-देवाद्यगोचरत्व-तेजोमयत्व-सूर्यानलादिदीप्त्यतिक्रान्तिमत्त्व-स्वप्रकाशत्व--देवदानवादिप्रेक्षणानर्हत्व-तमोमोहादिशून्यत्व-योगादिसाधनसिद्धपरमयोगिगम्यत्व-परिणामक्षयादिप्राकृतधर्मप्रत्यनीकनित्याक्षयाव्ययत्वादिमत्त्व- योगस्मरणात्प्रकृतेः परत्वं श्रीपुरुषोत्तमाधिष्ठितत्वं च सिद्धम्। नहि ब्रह्मलोकादीनां तद्विपरीतप्राकृतधर्मवतां प्रकृतिकार्यब्रह्माण्डमध्यगानां श्रुतिस्मृतिनिर्णीताप्राकृतानां पूर्वोक्तानां लिङ्गानामध्वपारत्वादीनां

समन्वयभूमित्वं प्रतिपादयितुं शक्यं स्वत एव नाशयोगेन पुनरावृत्तिमत्त्वात्।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।
(भ०गी०अ०८श्लो०१६)

इति श्रीमुखगानात्। शान्तिपर्वणि—

ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः।
अतीव तत्पदं पुण्यं पुण्याभिजनवन्दितम्॥
यत्र गत्वा न शोचन्ति न च्यवन्ति पतन्ति च।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्वताः॥

इत्यादिना ज्ञानविज्ञानसपन्नमुमुक्षुगम्यत्व–पुण्यतमत्व–च्युतिव्ययादिप्राकृतधर्मशून्यत्वोक्तेः। अन्यत्र चापि—

दिव्यस्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम्।
प्रभोर(१)क्ष नोऽस्मात्स्वप्रपन्नान् कल्पे कल्पे जायमानः स्वमूर्त्या॥

इत्यादिना श्रीभगवन्तं देवानां विज्ञप्त्या दिव्यस्थानत्वाजरत्वान्यप्रमाणातीतत्व–दुर्ज्ञेयत्व–शास्त्रैकवेद्यत्वादियोगोक्तेः। एतेन सत्यलोके एव कश्चित्प्रदेशविशेषो वैकुण्ठशब्दाभिधेयो नान्यत्प्रकृतेः परं किञ्चिद्विष्णुधामास्तीति केषां कुतर्कनिष्ठानामुद्घोष इति निरस्तम्। भारते तदितरेषां सत्यादिसर्वलोकानां प्राकृतत्वाविशेषेण तदपेक्षया नरकत्वनिरूपणात्।

एते वै निरयास्तात लोकस्य परमात्मनः॥

इत्यादिना। किञ्च—

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

इति स्मृत्या प्राकृतप्रलये चतुर्मुखस्यापि स्वाधिकारावसाने स्वलोकवासिभिः कैश्चिदधिकारिविशेषैः सह परमपदप्रवेशस्मरणादपि परमव्योमादिशब्दाभिधेयस्य श्रीविष्णुलोकस्य तद्विलक्षणत्वं प्रकृतिपरत्वं मुक्तोपसृप्यत्वं च सिद्धम्।

*पञ्चरात्रे च—

लोकं वैकुण्ठनामानं दिव्यषाड्गुण्यसंयुतम्।
अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम्॥

(१) 'रक्षनस्मात्स्वप्रपन्नात्' आदर्शे।

नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः ।
सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभैः ॥
वापीकूपतडागैश्च वृक्षखण्डैश्च मण्डितम् ।
अप्राकृतसुरैर्वन्द्यमयुतार्कसमप्रभम् ॥
प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा ।
क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशव ॥

इत्यादि । एषां व्याख्यानं च पूर्वाचार्यैः विस्तरतो निरूपितं नास्मच्छ्रमापेक्षेति । अन्यत्रापि—

वैकुण्ठे तु परे लोके श्रिया सार्द्धं जगत्पतिः ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह ॥

इत्यादीनि ह्यन्यान्यपि वाक्यानि अत्रानुसंधेयानि । स एव ब्रह्मलोक–परमपद–विष्णुपद–वैकुण्ठ–परमव्योम–परलोकादिशब्दाभिधेयः, "यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हि वै स पाप्मना विनिर्मुक्तः सामभिरुन्नीयते ब्रह्मलोकं धृत्वा शरीरमकृतं कृत आत्मा ब्रह्मलोकमभिसम्भवामि स खल्वेवं वर्त्तयन्यावदायु ब्रह्मलोकं समुत्पद्यते नच पुनरावर्त्तते" ।

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

इति मन्त्रोपासको वैकुण्ठभवनं गमिष्यति । "योऽस्याध्यक्षः परमे व्योमन्" "हिरण्मये परे लोके विरजं ब्रह्मनिष्कलम् " इत्यादिभ्यः । किञ्च प्रमाणातीतत्वादिदमियदिति तत्र तैर्नित्यमुक्तैरपि इयत्ताद्यवच्छेदेन वक्तुमशक्यः भगवन्महिम्नोऽमूर्त्तित्वात् "स भगवान्कुत्रास्ते स्वमहिम्नि" इति श्रुतेः । "न ते विष्णोर्जायमानो न जातो देवस्य महिम्नः परमन्तमाप" इति श्रुतेः ॥ १७ ॥

पूर्वश्लोकेन मुक्तोपसृप्यं श्रीभगवद्धाम शास्त्रमुखेन निरूपितम्, अथ प्राप्त्यसाधारणोपायमाहार्द्धेन-*सत्प्रसङ्गबललभ्यभक्तित इति*। सतां "अनन्यांश्चिन्तयन्तो माम्" इत्यादिना ।

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।"

( भ० गी० अ०७ श्लो० १७ )

"मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः"।

( भ० गी० अ० ११ श्लो० ५५ )

"अहमेव गतिस्तेषां निराशीःकर्मकारिणाम्"।

इत्यादिना श्रीमुखगीतानां ज्ञानवैराग्यादिदैवीसम्पद्भूषितानां भगवदतिरिक्तान्यसाधनफलसम्बन्धशून्यानां भगवत्प्रसादैकेषणातृणीकृतसर्वपुरुषार्थानां श्रीगुरुकृपैकविषयाणां भगवद्दिदृक्षैकलम्पटानाम् आकिञ्चन्यैकवित्तानां महतां प्रसङ्गः प्रकर्षेण नैरन्तर्येण प्रणिपातपरिप्रश्नश्रद्धाविश्वासार्जवसेवादिपुरःसरेण सङ्गः प्रसङ्गस्तदेव बलं तदुपदिष्टा[नुष्ठा]नसामर्थ्यं तेन लब्धुं योग्या लभ्या या भक्तिस्ततस्तया। तृतीयार्थे तसिप्रत्ययः। तयैव भवान् लभ्य एवेत्येवकारस्योभयत्रयोजना। अयोगव्यवच्छेदार्थकोऽयमेवकारः भवच्छब्दान्वितो लाभशङ्कां व्यवच्छिनत्ति न लभ्य इति न अपि तु लभ्य एवेत्यर्थः। भक्तिपदान्वितश्च द्वितीयावधारणशब्दोऽन्ययोगव्यवच्छेदार्थकः। सचोपायान्तरं व्यवच्छिनत्ति भक्त्यैव, न साधनान्तरैरित्यर्थः।

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥

( भ० गी० अ० ११ श्लो० ५३-५४ )

इति श्रीमुखोक्तेः।

न हि यज्ञफलैस्तात न तपोभिश्च संचितैः।
शक्यते भगवान् द्रष्टुं न दानेन न चेज्यया॥
तद्भक्तैस्तद्गुणप्राणैस्तच्चित्तैस्तत्परायणैः।
शक्यते भगवान् द्रष्टुं ज्ञाननिर्धूतकिल्बिषैः॥

इति वाल्मीक्युत्तरकाण्डे श्रीभगवत्सनत्कुमारवचनाच्च। भक्तिरिति सामान्यप्रयोगात् श्रीहरिगुरूभयविषयिका बोध्या।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

"भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी" इत्यादिश्रुतिभ्यः। लाभविषयं श्रीपुरुषोत्तमं विशिनष्टि—*रसमूर्तिमानिति*। रसशब्द आनन्दपर्य्यायः रसमात्रा मूर्तिः विग्रहं योगिध्येयं सर्वम-

कुलाश्रयं यस्य सः "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। एष आनन्द याति। एतस्यैवानन्दस्य भूतानि मात्रामुपजीवन्ति। विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिभ्यः। रसशब्देन मायिकविग्रहवादिनो निरस्ताः। यदात्मको भगवांस्तदात्मिका व्यक्तिरित्यादिश्रुतेः। तच्च पूर्वमेवोक्तम्। मतुप्प्रत्ययप्रयोगाच्च स्वरूपविग्रहवादिनोऽपि परास्ताः।

अथ तस्य दृढीकरणार्थं तद्विमुखान्निन्दति अर्द्धेन-*संमुखाइति*। ननु ये सम्मुखा न भवन्ति तेषां का गतिरित्याशङ्क्याह ये बहिर्मुखा अनादिदुष्कृतकर्माणो भक्तेः सम्मुखा न भवन्ति शास्त्रोक्ताचार्योपसृतिपूर्वकं भगवदीयानादिभागवतसंप्रदायमार्गे न प्रवर्त्तन्ते इति पूर्वपक्षवाक्यार्थः। येन हेतुना अनादिजन्मसहस्राचरितदुष्कृतपुञ्जयोगेन तत्प्रवृत्तिप्रतिबन्धकेन सन्मार्गे न प्रवर्त्तन्ते तेनैव हेतुना ते विमुखा निरयान्पुराणोक्तरौरवादीन् नियन्ति गच्छान्ति। किञ्च जीवन्तोऽपि दुःखमेव भुञ्जते इत्याह-*विपद्गणानिति*। विपदां गणाः समुदायास्तांश्च नियन्ति जीवन्तोऽपीति शेषः। पञ्चक्लेशैः त्रिविधैस्तापैश्च पीड्यमाना नित्यं संसारचक्रे भ्रमन्तीति यावत्। "तद्य इह रमणीयचरणा अभ्यासोहयते रमणीयां योनिमाद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्यासोहयते कपूयां योनिमाद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा, अनिशमनुश्वसन्त्यसुखोद्धरितास्तव रिपवो दृतिवत्तमसि प्रविष्टाः तव गुणपृथनाः परिहाय तमः प्रयान्ति पदमजस्रमनन्तसुखं न चेदवेदीन्महती विनष्टिः मृत्योः स मृत्युमाप्नोति अर्द्यमानः स्वकर्मभिः स्वकर्मणा जायते तत्र तत्र" इत्यादिश्रुतिभ्यः।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः॥(भ०गी०अ०७श्लो०१६)
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः(भ०गी०अ०९श्लो०१२)
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम्॥
(भ० गी० अ० १६ श्लो० १९-२०)

कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः।
जीवन्मृतास्तुतेज्ञेया न सम्भाष्याः कदाचन॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥
(भ० गी० अ० ९ श्लो० १३)
जन्मान्तरसहस्रेषु तपोदानसमाधिभिः।
नराणांक्षीणपापानां कृष्णे भक्तिः प्रजायते॥
इत्यादिस्मृतिभ्यश्चान्वयव्यतिरेकगमिताभ्यः॥ १८॥

अथ प्रमाणप्राबल्यं मीमांस्यते अनेन श्लोकेन-*अक्षमेवेति*। तत्र प्रमाकरणं प्रमाणम्। यथार्थज्ञानं प्रमा। तद्वति तत्प्रकारकत्वं यथार्थत्वम्। सा त्रिविधा-प्रत्यक्षानुमितिशाब्दभेदात्। तत्र विषयसम्बन्धेन्द्रियजन्यं विषयेन्द्रियसम्बन्धजन्यं वा ज्ञानं प्रत्यक्षम्। तद्विविधं-बाह्यमाभ्यन्तरं च। तत्र शब्दस्पर्शरूपरसगन्धविषयकं श्रावणस्पार्शनचाक्षुषरासनघ्राणजानुभूतिभेदात्पञ्चविधं बाह्यम्। सुखदुःखादिविषयकं मनो मात्रजन्यं ज्ञानमान्तरम्। विषयसम्बद्धमिन्द्रियं विषयेन्द्रियसं[बन्धो वा] तत्करणत्वात्प्रत्यक्षप्रमाणे॥ १॥

व्याप्तिजन्यं ज्ञानमनुमितिः। व्याप्तित्वं नाम हेत्वधिकरणनिरूपितवृत्तितावच्छिन्नात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्। व्याप्तिर्द्विधा-अन्वयव्यतिरेकिभेदात्। तत्र हेतुसाध्ययोः सामानाधिकरण्यनियमोऽन्वयव्याप्तिः। यथा पर्वतो वह्निमान् धूमवत्त्वात् यत्र धूमस्तत्र वह्निः, महानसादिवदिति। साध्यसाधनप्रतियोगिकाऽभावसाहचर्यनियमो व्यतिरेकिव्याप्तिः। यथा तत्रैव यत्र वह्न्यभावस्तत्र धूमाभावो महाह्रदादिवदिति। पुनरपि प्रकारान्तरेण द्विधा। लौकिकी वैदिकी चेति। लौकिकप्रत्यक्षादिप्रमाणभूता लौकिकी, देहो नात्मा भौतिकत्वात् घटादिवदित्यादिप्रयोगात्। शास्त्रैकप्रमाणभूता वैदिकी। यथा प्रत्यगात्मा ज्ञानस्वरूपः चेतनत्वात् परमात्मवत् यन्नैवं तन्नैवं घटादिवत्। जीवोऽच्छित्तिधर्मा चेतनत्वात् ब्रह्मवत् योयं विज्ञानमयः "अविनाशी वा अरे आत्माऽनुच्छित्तिधर्मा" इति श्रुतेः। परमेश्वरः क्षराक्षराभ्यां परः विश्वात्मत्वात् व्यतिरेके घटादिवत् "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्रुतेः। इतिप्रयोगात्। तज्जन्यं ज्ञानमनुमितिः। तत्करणत्वादनुमानं तत्र प्रमाणम्।

शब्दज्ञानजन्यं ज्ञानं शाब्दम्। आप्तप्रयुक्तं वाक्यं शब्दः। विप्र-

लिप्साबुद्धिमान्द्येन्द्रियापाटवादिभ्रमहेत्वभावे सति यथार्थवक्तृत्वमाप्तत्वम् । तत्राप्ततमोवेदः तदर्थस्मर्त्तारो मनुवाल्मीकिपराशरव्यासादयस्तद्व्याख्यातारो भाष्यकारादयश्च तेषां प्रयुक्तं वाक्यं शब्दरूपं प्रमाणम् । स च शब्दः आत्माश्रितवृत्तिद्वारा स्वार्थं निभालयति । तत्र परार्थाभिधानं वृत्तिः । परार्थत्वं नाम प्रकृतिप्रत्ययाभिधेयभिन्नार्थत्वम् । तद्वाचकत्वं तत्त्वम् । सा द्विधा–मुख्यामुख्या चेति। तत्र मुख्या शक्तिः । सा हि अभिधेतिसंज्ञका पदार्थान्तरभूता सामान्यमात्रविषयकासङ्केतलभ्येति कर्ममीमांसकाः प्राहुः । अस्मात्पदादयमर्थो बोध्य इतीश्वरसङ्केतरूपा जात्यवच्छिन्नविशिष्टव्यक्तिविषयकेति गौतमीयाः । अर्थैः साकं शब्दानां योग्यता लक्षणकानादिसम्बन्धविशेषरूपेति शाब्दिकाः । अग्निवृत्तिस्वाभाविकदाहकतासामर्थ्यवत् शब्दनिष्ठतदर्थज्ञापनार्हसामर्थ्यं पदार्थान्तरभूतमित्यौपनिषदा इति विवेकः । सा त्रिधा–रूढिर्योगो योगरूढिश्च । समुदायशक्तिः रूढिः । नीलं शुक्लः डित्थः लोष्ठ इत्यादि । तत्र रूढाः शब्दाः द्विधा–अनेकार्थाः पर्यायाश्च । तत्राद्याः हरि–गो–पतङ्ग–सैन्धवादयः। द्वितीया हस्तकरादयः अवयवशक्तिर्योगः । यथा माधवो रमाकान्तो वासुदेवो मुरारिर्गोपालो गोवर्द्धनधर इत्यादयः । उभयविधशक्तिर्योगरूढिः । यथा विष्णुः व्यापनयोगात्, विष्णुः परमेश्वरः

विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ।

इति रूढश्चापि स एवार्थः । द्वितीयापि द्विधा–लक्षणा गौणी चेति । शक्यसम्बन्धो लक्षणा ।

स्वशक्येन सह नियमरूपा व्याप्तिरेव लक्षणेति मीमांसकाः । तत्तुच्छं, तथाच मञ्चाः क्रोशन्तीत्यत्र मञ्चपदस्य मञ्चस्थपरुषे लक्षणाऽभावापत्तेः, मञ्चपुरुषयोर्व्याप्तेरदर्शनात् । एवं यष्टीः प्रवेशयेत्यादिष्वप्यव्याप्तेः ।

गङ्गादिपदानां तीरादौ शक्तिरेव सर्वेषां पदानां सर्वत्रैव शक्तत्वात् लक्षणायाश्च स्वातन्त्र्येण वृत्तित्वमेव नास्तीति शाब्दिकैकदेशिनः । तच्चिन्त्यं, सर्वेषां पदानां सर्वार्थवाचकत्वाभ्युपगमे सर्वेषु पदेषु वाक्यस्थेषु एकतमेनापि सर्वपदार्थोपस्थित्यापत्त्या तस्यैव सर्वपदार्थोपस्थापनार्थं पौनः पुन्येनापि आनुपूर्वीरचनेन सर्वार्थसिद्ध्यापत्तेः, पदान्तरप्रयोगवैयर्थ्यप्रसक्तेश्च घटपदार्थबोधाय पटादिप्रयोगस्या-

पि साधुत्वापत्तेश्च, मातृप्रयोगस्थले भार्याप्रयोगस्यापि याथ्यात्स्यापत्तेश्चेति ।

सा त्रिधा—जहत्स्वार्थाऽजहत्स्वार्था जहदजहत्स्वार्था चेति । तत्र वाच्यार्थस्य सर्वांशत्यागेनान्यत्र वृत्तिः प्रथमा । यथा गङ्गायां घोष इत्यत्र गङ्गावाच्यार्थप्रवाहस्य सर्वांशत्यागेनैव तीरादौ वृत्तित्वात् । शक्यार्थापरित्यागेनैवान्यत्र वृत्तिर्द्वितीया । सा च शक्तिसदृशी स्वार्थात्यागात् । यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र दध्युपघातकत्वेन काकपदस्य स्वशक्येषु तदितरमार्जारादिषु च वृत्तिः । शक्यैकदेशत्यागेन तदेकदेशवृत्तिस्तृतीया । यथा घटो नित्य इत्यत्र घटव्यक्तौ नित्यत्वायोगात् तत्त्यागेन तदेकदेशे घटत्वसामान्ये वृत्तिः ।

अत्र केचित् सोऽयं देवदत्त इत्यत्रापि तत्तत्कालादिवैशिष्ट्यैतत्कालादिवैशिष्ट्ययोर्युगपदन्वयानुपपत्त्या तत्पिण्डमात्रे शक्यैकदेशे चान्वय इत्याहुः । तदसाम्प्रतं, पूर्वमेव विस्तरशो निरस्तत्वात् ।

इयमेव भागलक्षणेत्यभिधीयते ।

शक्यवृत्तिलक्ष्यमाणगुणसम्बन्धो गौणी । यथा सिंहो माणवकः इत्यत्र सिंहवृत्तिशौर्यक्रौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिः ॥

लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ।

इतिलक्षणवाक्यात् । सैव लक्षितलक्षणेत्यप्युच्यते इति संक्षेपः । विस्तरस्तु आकरेषु द्रष्टव्यः ।

अन्येषां चार्थापत्त्यादिप्रमाणानामत्रैवान्तर्भूतत्वात्पार्थक्ये गौरवमात्रत्वाच्च त्रीण्येव प्रमाणानीति । तत्र बलाबलत्वं निरूप्यते । इह प्रमाणप्राबल्यनिर्णये अपूर्वजाः आधुनिकाः प्रमाणत इति प्रमाणेषु मध्ये यद्यपि अक्षमेव सबलं कथयन्ति प्राथम्यादिहेतुना, तद्व्यवहारविषयेषु भवतु न वेति, तथापि हे विभो अनन्ताचिन्त्यशक्ते त्वत्स्वरूपगुणवर्णने तु वाक्यमेव वैदिकशब्द एव सबलं प्रतीयते निश्चीयते । एवकारेणान्येषां प्रमाणानां दौर्बल्ययोगात्प्राबल्यं व्यवच्छिद्यते । पूर्वजा इति पाठे तु एवं योजना—यद्यपि केचित् अक्षमेव सबलं प्रमाणतः प्रमाणानां मध्ये कथयन्ति । तथापि पूर्वजास्तु नैवमाहुः इत्यनुवर्त्तनीयम् । पूर्वजा वेदाः सनकनारदव्यासप्रभृतयो वा । कुत इत्यपेक्षायामाह—हे *विभोत्वत्स्वरूपगुणवर्णने* निर्णयमुखेन

प्रतिपादने तु वाक्यमेव सबलं न प्रत्यक्षानुमानादि प्रतीयते ऽध्यवसीयत इत्यर्थः। कुतः ? त्वत्स्वरूपगुणशक्त्यादीनां प्रमाणागोचरत्वात्, नेन्द्रियाणि नानुमानं "नावेदविन्मनुते तं बृहन्तं" "नैषा मतिस्तर्केणापनेया" इति श्रुतिभ्यः। एतेन प्रत्यक्षस्य प्राथम्यात् व्याप्तिमूलत्वाच्चानुमानात्प्राबल्यम्, आगमजन्यज्ञानस्याप्यन्ततोऽपरोक्षत्वेनैव मोक्षहेतुत्वान्न शाब्दमात्रं, तस्माच्छब्दतोऽपि प्रत्यक्षस्य प्राबल्यमिति निरस्तम्। मायामूर्द्धादिप्रत्यक्षे सूर्यादिमण्डलपरिमाणप्रत्यक्षे चान्यथादर्शनेन नियतयाथात्म्यविषयकत्वाभावात् निदिध्यासनजन्यपरमयोगिसाक्षात्कारस्य प्राबल्यविवक्षायां तु तस्य शास्त्रतन्त्रत्वेनेष्टापन्नत्वात्। एतदुक्तं भवति-नास्माभिः प्रत्यक्षादिप्रमाणान्तरस्वरूपनिरसने तात्पर्यम्, अपि तु तेषां शास्त्रमृते स्वतन्त्रप्रमाणत्वमात्रे एवम्। तथाच भगवत्स्वरूपगुणादीनामचिन्त्यानन्तत्वादिभिर्लौकिकतया न प्रत्यक्षादिविषयतार्हत्वं, तत्प्रतिपादने तु वेदस्यैव शक्तिमत्त्वात्तस्यैव प्राबल्यं तन्मूलकस्मृत्यादेश्चापि तत्तन्त्रत्वेनैवेति संक्षेपः। विस्तृतं चैतच्छ्रीदेवाचार्यपादैः प्रमाणनिर्णयाधिकरणो "शास्त्रयोनित्वात् (अ० सू० १, १, ३,) इत्यस्य व्याख्याने "सर्वे वेदा यत्पदमामनन्ति तं त्वौपनिषदं पुरुषं पृच्छामः" "वेदैश्च सर्वैरहमेव वेद्यः"।

वेदे रामायणे चैव पुराणे भारते तथा।
आदावन्ते च मध्ये च हरिः सर्वत्र गीयते॥
नमाम सर्ववचसां प्रतिष्ठा यत्र शाश्वती।

इत्यादिश्रुतिस्मृतिभ्यः। अलं विस्तरेण॥ १९॥

एवं प्रमाणप्राबल्यं निर्णीय तदाश्रितानां भागवतानां सर्वत्र परमात्मदर्शिनां श्रेष्ठयं दर्शयन् "उपमासूर्यकादिवत्" इति सूत्रं व्याचष्टे। पूर्वनिरस्तप्रतिबिम्बवादविषयकप्रामाण्यभ्रान्तिनिराकरणार्थम्-*एकधेति*। अत्र येनेति कर्तृपदमनुवर्त्तनीयं यत्तदोर्नित्यसम्बन्धात्। येन भगवत्परिपूर्णप्रसादभाजनेन चरमजन्मना मुमुक्षुणा आत्मनो विश्वान्तरात्मनस्तवानन्ताचिन्त्यस्वाभाविकासंख्येयकल्याणगुणार्णवस्य विश्वमूर्त्तिस्वरूपं वा यत्र ब्रह्मादिश्वपाकान्तेषु अजहत्षाड्गुण्यादिना तत्तद्बुद्धिगतदोषास्पृष्टमाहात्म्यदिक्तटं प्रदृश्यते स सद्धर इत्यन्वयः। "स्वाभाविकी ज्ञानबलक्रिया च" "यः

सर्वज्ञः सर्ववित् " " य आत्मापहतपाप्मा विरजो विमृत्युर्विशोकोऽवि-
जिघत्सोऽपिपासः सत्यकामः । सत्यसङ्कल्पः एषसर्वभूतान्तरात्माऽ-
पहतपाप्मादिव्यो देव एको नारायणः सर्वव्यापी सर्वभूतान्तरात्मा ।

"यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इत्यादिश्रुतिभ्यः । "वासुदेवः सर्वमिति" "सकलमिदमहं च वा सुदेवः" इत्यादिस्मृतिभ्यश्च । तत्र समष्ट्यन्तरात्मतया एकधा व्यष्ट्यन्तरात्मतया च बहुधेतिदर्शनप्रकारः । प्रदृश्यते इति प्रशब्दोऽत्यन्तोत्कर्षवाचकः । तत्त्वं च उत्तमाधमान्तरवृत्तित्वेऽपि तद्दोषास्पृष्टत्वम् ।

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ इति श्रुतेः ॥

अस्यार्थः–एक [ एव ] हि भूतात्मेति । विश्वात्मा भगवान् वासुदेवः प्रथमो भूतशब्दः ब्रह्मर्षिदेवर्ष्यादिसत्त्वप्रधानजीववर्गपरो, द्वितीयश्च तमःप्रधानचाण्डालश्वशृगालादिनिकृष्टतमजीववर्गवाचकः । ब्रह्मर्षिदेवादिसत्त्वप्रधानेषु सर्वोत्तमेषु जीवेषु श्वशृगालादिनिकृष्टतमेषु च व्यवस्थितोऽपि अप्रच्युतस्वरूपगुणशक्तिरस्पृष्टदोषगन्धमाहात्म्यरूप एव दृश्यते तत्प्रसादविषयैरनन्यशरणैः श्रीप्रह्लादादिसदृशैस्तद्भक्तैर्ज्ञानवैराग्यादिभूषणैः सत्संप्रदायाचार्यानुगृहीतैः शास्त्रदृष्ट्या तत्प्रसादलभ्ययेति यावत् । एकधा समष्ट्यन्तरात्मत्वेन बहुधा व्यष्ट्यन्तरात्मत्वेनेति विवेकः । चैवेति बहुधात्वव्यावृत्त्यर्थः । बहुधात्वं तस्यौपाधिकं बोधयति । यद्वा, स्वरूपत एकधैव बहुधा इव न तु बहुधेत्यर्थः । ननु उत्तममध्यमाधमेषु वृत्तित्वे कथं न तद्गतदोषयोग इत्याशङ्क्य दृष्टान्तेन निराकरोति–जलचन्द्रवदिति । यथा चन्द्रः श्रीगङ्गादिपुण्यतीर्थजलेषु शूकरादिलुण्ठनगर्त्तादिजलेषु च स्वकरनिकरव्याप्त्या तत्र तत्र वर्त्तमानोऽपि न तत्तद्गतगुणदोषैः संयुज्यते । तथा परमात्मापि ब्रह्मादिश्वपाकान्ते सर्वत्र साम्येन स्वरूपव्याप्त्या तिष्ठन्नपि न तद्गतगुणदोषैर्युज्यते अस्पृष्टस्वभावत्वात् ।

सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ॥
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥

इति श्रुत्यन्तरात्। सूत्रमपि व्याख्यातप्रायं तुल्ययोगक्षेमात्। एतेन केचिदस्य सूत्रस्य श्रुतेश्च प्रतिबिम्बवादपरत्वं वदन्ति, ते निरस्ताः प्रतिबिम्बपदस्य कुत्रचिदप्यश्रवणात्, अच्छायमितिश्रुतेश्चेति। एवं श्रुतिसूत्रे व्याख्याय तथाभूताधिकारिणं स्तौति शिष्टैः पदैः। खल्विति निश्चयेऽवधारणार्थे। स भाग्यवत्सु उत्तम एव स एव भाग्यवत्सु उत्तम इति वा। भाग्यवन्तः पुरुषार्थभागिनस्तेषु श्रेष्ठतमः "न पश्यो मृत्युं पश्यन्ति न रोगं नोत दुःखतां स उत्तमः पुरुषः" इत्यादिश्रुतेः।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय॥
(भ० गी० अ० ७ श्लो० १७)

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः।
(भ० गी० अ० ७ श्लो० १९)

इति श्रीमुखोक्तेः। *सोऽपि युक्ततम एवेति*।

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः॥
(भ० गी० अ० ६ श्लो० ४७)

इति गानात्। स एव-*सद्वरइति*। सतां मध्ये वरः श्रेष्ठः भागवतोत्तम इत्यर्थः, सदैव तेषु भगवत्सान्निध्यात् "सन्धिश्च यागं सन्धत्ते ब्रह्मणे ईशो रमते तस्मिन्नु जीर्णे शयाने नैनं जयत्यहस्सु पूर्वेषु" इति श्रुतेः। तेषां दौर्लभ्यसुचनायैकवचनप्रयोगः। तथाच पौष्करे-

दुर्लभा भगवद्योगभाविनो भुवि मानवाः।
तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदम्॥ इति॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥
(भ० गी० अ० ७ श्लो० ३)

इति श्रीमुखोक्तेश्च॥ २०॥

इदानीम् "अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एक" (ब्र० सू० २-३-१७-४३) इत्यधिकरणं व्याचष्टेऽनेन श्लोकेन-*ह्यंशतेति*। ह्यंशताऽत्राऽशांशिभावरूपसम्बन्धः चेतने प्रत्यगात्मनि ह्यंशता ब्रह्मांशांशिभावसम्बन्धः भाति शास्त्रमु-

त्वादितिशेषः । "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते" "ज्ञाज्ञौ द्वावजावीशानीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" ( क० उ० २-२-१३ ) "अंशो ह्येष परस्य योऽयं पुमानुत्पद्यते म्रियते च नाना ह्येनं व्यपदिशन्ति" इत्यादिश्रुतिभ्यः । नापि चेति ह्यंशताभावोऽपि अभेदोऽपीति भातीति सम्बध्यते अभेदशास्त्रात् "ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवास्त्वं स्त्री त्वं पुमानसि त्वं कुमारस्त्वं वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातोऽसि विश्वतोमुखः" इत्यादिश्रुतिभ्यः । तत्र संशयः—किं जीव औपाधिको ब्रह्मांशः उत ब्रह्मैव भ्रान्तं सञ्जीवभावमापन्नं वाऽत्यन्तभिन्नं ब्रह्मविशेषणरूपांशः, परमेश्वरात्मीयभूतांशो वेति । किं तावद्युक्तम् ? औपाधिक एवांशः । यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीति दृष्टान्तश्रवणात् निरवयवे ब्रह्मणि स्वाभाविकांशत्वाऽसंभवात् । तथाच यथाऽऽकाशस्य पार्थिवाधिष्ठानावच्छिन्नं कर्णच्छिद्रं, यथा वायोः पञ्चवृत्तिः प्राणः, यथा वा मनसः कामादयो वृत्तयः । स च भिन्नोऽभिन्नस्तत्राभिन्नं रूपं स्वाभाविकम्, औपाधिकं भिन्नरूपम् । उपाधीनां च बलवत्त्वात्तत्संमूर्च्छितस्तन्मयः । संसरतीति स एव नानाव्यपदेशविषयः उपाधिश्च नित्यः । अन्यथा बन्धमोक्षव्यवस्था न स्यात् ।

अभेदज्ञानाच्च मोक्ष इत्याहुरेके ।

अन्ये तु अंश इव अंशः न स्वाभाविकः "ब्रह्मणो निष्कलम्" इति श्रुत्या निरंशत्वावगमात् । भ्रान्तिकल्पित एवांशो जीवः । भेदश्रुतिस्तु भ्रान्तिकल्पितप्रत्यक्षसिद्धभेदानुवादपरा । उपाधिरपि भ्रान्तरूप एव । नचैवं बन्धमोक्षव्यवस्थाहानिरिति वाच्यं, तयोरपि भ्रान्तिकल्पितत्वाविशेषात् । उभयविधानामपि वाक्यानामनुवादपरेभ्यो भेदवाक्येभ्यः प्राबल्यादित्याहुः ।

इतरे तु अत्यन्तभिन्न एव जीवः । स चांश एव ।

"मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः" ।
"द्वासुपर्णा सयुजा सखाया" इत्यादिश्रुत्या ।
पिताऽहमस्य जगतो माता धाता पितामहः ॥

( भ० गी० अ० ९ श्लो० १७ )

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।

इत्यादिस्मृत्या च नानासम्बन्धव्यपदेशात्, सम्बन्धिनि अंश-शब्दस्य प्रयोगदर्शनात् युधिष्ठिरो धर्मांशः, अर्जुन इन्द्रांशः इत्यादौ; सादृश्येऽपि तथा प्रयोगाच्च चन्द्रमण्डलाच्छ्रांशो गुरुमण्डल इत्यादौ। अभेदश्रुतयस्तु 'ब्राह्मणः सर्वदेवता' इत्यादिवदमुख्याः। न च भेदश्रुतिरनुवादपरा, अपितु प्रत्यक्षसहकृतत्वात्प्रबला। यथा "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति श्रुतेः अनुमानसहकृतया "यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या निर्बलत्वं निर्णीतं, तथा प्रकृतेऽप्यूह्यम्। तस्मादभेदश्रुतेरेवान्यसाहाय्यशून्याया दौर्बल्येन गौणार्थपरत्वमित्याहुः।

तत्र न तावदौपाधिकांशत्वं प्रमाणपदवीमारोहति विकल्पासहत्वात्। तथाहि; किमुपाधिना च्छिन्नो ब्रह्मखण्डोऽणुरूपो जीव उताच्छिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः उतोपाधिसंयुक्तं ब्रह्मरूपमुतोपाधिसंयुक्तचेतनान्तरमथोपाधिरेवेति ?, अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्पते। आदिमत्त्वं च जीवस्य स्यात्। एकस्य सतो द्वैधीकरणं छेदनम्। द्वितीये कल्पे ब्रह्मण एव प्रदेशविशेष उपाधिसम्बन्धादौपाधिकाः सर्वे दोषास्तस्यैव स्युः, उपाधौ गच्छत्युपाधिना स्वसंयुक्तं ब्रह्म प्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तप्रदेशभेदात्, क्षणे क्षणे बन्धमोक्षौ च स्याताम्। आकर्षणे चावच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण आकर्षणं स्यात् निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत् ? तर्ह्युपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात्। अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात् प्रदेशभेदादप्रतिसन्धाने चैकस्यापि सोपाधौ गच्छति सति प्रतिसन्धानं न स्यात्। तृतीये तु कल्पे, ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात्, सर्वेषु च देहेषु [एक] एव जीवः स्यात्। तुर्ये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात्। चरमे च चार्वाकपक्ष एव गृहीतः स्यात्। यदुक्तं आकाशस्य पार्थिवाधिष्ठानावच्छिन्नकर्णच्छिद्रवदंश इति, तत्तुच्छम् तत्रांशत्वव्यवहारादर्शनात्। किञ्च तस्यापि परिणामिद्रव्यत्वेन स्वाभाविकत्वमपि वक्तुं शक्यते एव। नापि, वायुदृष्टान्तस्य

सम्यक्कं वायोः सावयवत्वाविशेषेण वास्तवांशत्वसम्भवात्। नापि मनसस्तद्वृत्तीनां चांशांशिभावस्यौपाधिकत्वं विवेकिभिः श्लाघ्यं कामादीनां मनःपरिणामत्वेन तत्कार्यत्वात्। अंशांशित्वव्यवहाराप्रतीतेश्च। "एतत्सर्वं मन एव" इति समानाधिकरणश्रुतिस्तु तन्निमित्तकत्वेन तदभिधानपरा नांशाभिधानपरेति बोध्यम्। नापि भ्रान्तिवादिपक्षः सम्भावनायोग्यः, तस्य पूर्वमेव विस्तरशो निरस्तत्वात् "युक्तिरेव शिथिला हि तन्मते" (श्लो० १६) इत्यादिना। नापि अत्यन्तभेदो रमणीयः तार्किकादिमतप्रवेशात्, अभेदश्रुतीनामर्थवादत्वस्य मीमांसकैरपि स्वीकार्यत्वात्। तथात्वे सर्ववेदान्तो दत्ततिलाञ्जलिः स्यात्। "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इत्यादिश्रुतिभिरेवात्यन्तभेदवादिनो निन्दितत्वाच्च। किञ्च अभेदश्रुतीनां स्वार्थत्यागे भेदश्रुतीनां चापरेण स्वार्थत्यागात् सर्वस्यापि वेदस्य नाशप्रसङ्गात्। मायावादिवदवैदिकसाम्यापत्तेः। तस्माद्ब्रह्मांश एव जीवः। तच्च विशिष्टस्य ब्रह्मणो विशेषणभूतः। तथाच एकस्त्वेकदेशवाची ह्यंशशब्दः विशिष्टैकदेशत्वाद्विशेषणस्येति मुख्य एवार्थः। नानाव्यपदेशस्तावत्सृष्टत्व-सृज्यत्व-नियन्तृत्व-नियम्यत्व-सर्वज्ञाज्ञत्व-स्वाधीनत्व-पराधीनत्वादिभिर्दृश्यते "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिश्रुतेः। अन्यथा चाभेदव्यपदेशोऽपि "तत्त्वमसि" "अयमात्मा ब्रह्म" इत्यादि। "ब्रह्मदाशा ब्रह्मेमे कितवाः" इत्येके ब्रह्मणो दाशकितवत्वमधीयते। तच्च त्वच्छरीरत्वेन तथात्वोपदेशोऽपि सुवच इत्याह—*त्वच्छरीरमिति*। *हेतुवर्णनादिति*। त्वच्छरीरत्वात्तत्तादात्म्यव्यपदेशः "यस्यात्मा शरीरम्" इतिश्रुतेः। शरीरशब्दोऽत्र विशेषणपरः ब्रह्मविशेषणत्वादित्यर्थः। तथाच मुख्य एवोभयविधश्रुतीनामर्थः। अत्र राद्धान्तमाह—*मन्य आत्मपरिशीलने कुत इति*। चेतने प्रत्यगात्मनि विषये इतरेतरविरुद्धभेदाभेदवाक्येषु सत्स्वपि आत्मपरिशीलने स्वरूपनिर्णये कुतोऽनुपपत्तिरित्यहं मन्ये इति योजना। परिशीलनं विचारः। तदात्मकत्व–तत्तन्त्रसत्ताकत्व–तन्नियम्यत्व–तद्व्याप्यत्व–तदाधेयत्वादिभिस्तदपृथक्त्वेनाभेदवाक्याविरोधः। सार्वज्ञा—ऽल्पशक्ति–स्वतन्त्रत्व–परतन्त्रत्वादिभिश्च नानात्वाद्भेदशास्त्रस्याप्यविरोधः। तस्मात्तदात्मीयत्वेन तदंशो जीव इति सिद्धम्।

एकवचनं सामान्यविषयकम्। एतच्च पूर्वमेव वाक्यार्थनिर्णये विस्तृतम्।

यच्चोक्तं प्रत्यगात्मनोऽचेतनस्य च ब्रह्मविशेषणत्वं, तन्नातिरमणीयम्। तथाहि व्यवच्छेदकत्वं तावद्विशेषणत्वम्। यथा रामो दाशरथिः। रामशब्दो भार्गवबलरामदाशरथिषु शक्तः। तत्प्रयोगे त्रयाणामुपस्थितौ सत्यां दाशरथिशब्दो व्यवच्छेदको भार्गवबलरामाभ्यां राघवो व्यवच्छेद्यः, तौ च व्यवच्छिन्नौ इति प्रक्रिया। दार्ष्टान्तिके तु चेतनाचेतनयोर्ब्रह्मविशेषणत्वाभ्युपगमे ताभ्यां व्यवच्छेदकरूपाभ्यां चेतनाचेतनाभ्यां कस्माद्ब्रह्म व्यवच्छिद्यते इति वक्तव्यम्। त्रिभ्यः पदार्थेभ्योऽन्यस्याभावादत्र न व्यवच्छिन्नं दृश्यते भवद्भिरन्यपदार्थानभ्युपगमात्। नापि विशेष्यरञ्जकज्ञानविषयत्वं विशेषणत्वम्।

स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम्।

इति वचनात्। यथा अतसीपुष्पसङ्काशः श्रीकृष्णः इत्यत्रातसीपुष्पविषयकबुद्ध्या कृष्णो रज्यते मनस्युपस्थाप्यते, नैवं दार्ष्टान्तिके चेतनाचेतनविशेषणज्ञानेन विशेष्यभूतः पुरुषोत्तम उपस्थापयितुं शक्यस्तस्मादस्वारस्योऽयं राद्धान्त इति संक्षेपः।

अथ प्रत्यगात्मस्वरूपनिर्णयौपयिकविशेषणमाह-*अहमर्थक इति*। अस्मत्पदार्थकेऽस्मच्छब्दाभिधेये इत्यर्थः। तत्र प्रमाणमाह-*अहंप्रतीतिविषये इति*। अहं जानामि करोमि शृणोमीत्यादिप्रत्ययानां विषये इत्यर्थः। उक्ताः प्रत्यया एवात्र मानामित्यर्थः। ननु नोक्तप्रत्ययविषयोऽयं प्रत्यगात्मा तेषां प्रकृतिकार्यरूपाहङ्कारविषयकत्वात "अथात्मादेशः" "अथाहङ्कारादेशः" इति श्रुत्या उभयोः पार्थक्येन निर्देशात्।

अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।

(भ० गी० अ० ७ श्लो० ४)

इति भगवद्वचनाच्च, सुषुप्त्याद्यवस्थासु तस्य व्यभिचारदर्शनाच्च। तथाच प्रयोगः-अहमर्थो नात्मा सर्वावस्थास्वननुगतत्वाद् देहेन्द्रियवदिति चेत ? न, उक्तहेतोः स्वरूपासिद्धत्वेनाभासमात्रत्वात्। तथाहि, सुषुप्त्यादावहमर्थो मानसिद्धः 'एतावन्तं कालं सुखमहमस्वाप्सम्' एतावन्तं कालं मूर्च्छित एवासं न किञ्चिदवेदिषम्, इत्या-

द्विस्मरणस्यैव मानत्वात्, योऽहमस्वाप्सं स एव जागर्मीतिप्रत्यभिज्ञानस्य च। तस्मात्तत्तदवस्थायामपि सुखाज्ञानविषयकज्ञानाश्रयाभिन्नोऽहमर्थोऽनुगत एव, अभिज्ञाप्रत्यभिज्ञयोरनुभवस्मरणयोश्चैकाधिकरण्यनियमात्। तत्र विशेषविषयकप्रत्ययोत्थानाभावस्याविरुद्धत्वात्। नन्वेतावन्तं कालमामप्यहं नावेदिषमिति प्रत्यभिज्ञाया अस्मदर्थाभावविषयिकाया अप्यपह्नोतुमशक्यत्वाद्व्यभिचारस्य तादवस्थ्यादस्मत्प्रयुक्तहेतुसिद्धिरिति चेत्? न, त्वदुक्तायामपि प्रत्यभिज्ञायां तस्यानुगतत्वाद्धेत्वसिद्धेस्तादवस्थ्यमेव। तथाहि, तत्र मामिति कर्मभूतद्वितीयान्तस्यास्मदर्थस्य जाग्रदाद्यवस्थानुभूतानादिकर्मसंस्कारप्रयुक्तात्मत्वाभिमतदेहाद्यवच्छिन्नो विषयः, अहमित्यस्य प्रथमान्तस्य कर्त्तुरस्मदर्थस्य देहेन्द्रियाद्यनवच्छिन्नशुद्धं ब्रह्मात्मकप्रत्यक्पदार्थो ज्ञाना विषयः, तथाच मामिति द्वितीयान्तपदार्थस्य जाग्रदनुभूतस्य देहाद्यवच्छिन्नस्य तत्राभावान्निषेधविषयत्वं सूपपन्नम्। तथैवाहमिति देहादिवियुक्तस्य विशिष्टाभावविषयकानुभवाश्रयाभिन्नस्य तत्रापि सत्त्वात्तस्य ज्ञातृतया भानमपि सूपपन्नतरम्। एवमहमर्थस्यानुभवितुः सर्वावस्थानुगतत्वेन हेत्वसिद्धेस्तादवस्थ्यमेव। एतेन "नजानात्ययमहमस्मि" इति श्रुतिरपि व्याख्याता। सापि विशिष्टे प्रतियोगिकाभावविषयकाज्ञानविधानपरेति भावः। किञ्च यद्यहमर्थस्य परामर्शो न चेत् स कथमात्मनः अहं ज्ञानादन्य आत्मेति परामर्शो न दृश्यते? अस्वाप्समित्यत्रापि उत्तमपुरुषप्रयोगो वा कथं स्यात्? उत्तमपुरुषप्रयोगान्यथानुपपत्त्यापि तत्प्रयोगार्हाहमर्थाविषयक एवायं परामर्श इत्यवगम्यते। अन्यथाऽहमर्थव्यावृत्तवस्त्वन्तरविषयकपरामर्शाङ्गीकारे एतावन्तं कालं सुप्तोऽहं वाऽन्योवेति संशयः स्यात्, न त्वहमेवेति निश्चयः। ननु नाहमंशो परामर्शः किन्तु परामृश्यमान आत्मा इदानीं जातेनान्तःकरणेनावच्छेदादहन्त्वं प्राप्तस्तथानुभूयत इति चेत्? न, 'नकिञ्चिदवेदिषम्' इत्यादावज्ञानांशेऽप्यपरामर्शत्वापातात्। नह्यज्ञानादिकं निराश्रयमन्याश्रयं वा परामृश्यते, किन्तु अहमर्थाश्रयम्। 'एतावन्तं कालं स्वप्नं पश्यन्नासं' 'जाग्रदासम्' इत्यत्रेव 'अहमस्वाप्सम्' इत्यत्राप्यहमंशे परामर्शानुभवाच्च। अन्यथा पूर्वं दुःखी स्वप्नं चापश्यत सोऽधुना सुखी जातः सुप्त इतिवद् यः पूर्वं मदन्यः सुप्तः सोऽधुनाऽहं जात इति धीः स्यात्। नन्वहङ्कारे सत्

मृश्यमानात्मैक्यारोपात्तज्ज्ञाने परामर्शत्वाभिमान इति चेत् ? न, परामर्शे परामर्शारोपाऽदर्शनात्, सिद्धेऽहमर्थस्यात्मान्यत्वे परामृश्यमानात्मैक्यारोपः, सिद्धे च तस्मिन्सुषुप्तावप्रकाशेनाहमर्थस्यात्मान्यत्वमितीतरेतराश्रयाच्च, अहमित्यतोऽन्य आत्मपरामर्शो नेत्युक्तत्वेन दृष्टहानाद्दृष्टकल्पनापाताच्च । किञ्च सुषुप्तावहमर्थाभावेऽहं विदुःखः स्यामितीच्छया सुषुप्तौ प्रवृत्त्ययोगः, योऽहं सुप्तः सोऽहं जागर्मीति प्रत्यभिज्ञानबाधश्च, योऽहं पूर्वेद्युरकार्षं सोऽहमद्य करोमीति प्रत्यभिज्ञानानुपपत्तिश्च अहंव्यक्तिभेदात । कृतनाशाकृताभ्यागमप्रसङ्गश्च कर्त्तुर्भोक्तुश्चाहमर्थस्य भिन्नत्वात् । अभिन्ने च चैतन्ये कर्तृत्वाद्यनङ्गीकारात् कर्तृत्वाद्यारोपस्य च देहादावपि सत्त्वात् अहं करोमीत्येव प्रतीत्याऽहमर्थान्यात्मनि कर्तृत्वारोपस्याप्यभावाच्च । किञ्च त्वन्मतेऽहङ्कार एव क्रियाशक्त्या प्राणः, विज्ञानशक्त्या मन इति । तथाच सुषुप्तौ लये प्राणकार्यं निश्वासादि न स्यात् । ननु प्राणस्याहङ्काराद्भेदपक्षेऽहङ्कारस्य लयो युक्तः, अभेदपक्षेऽपि प्राणांशविहीनस्य लयाङ्गीकारान्नोक्तदोष इति चेत् ? न, प्राणस्याहमर्थत्वाभावे कर्तृत्वस्य प्राणोपाधिकत्वेनाहंकर्त्तेति बुद्ध्ययोगात्। अहमर्थत्वे तु सुषुप्तावप्यहमुल्लेखापातात् । तस्मादहमर्थस्य सर्वावस्थानुगतत्वेनात्मस्वरूपत्वाभिन्नत्वं, तद्विषयका एव प्रतीयतेइति सिद्धम् ।

पूर्वोक्तश्रुतिस्मृत्योस्तु "गर्वोऽभिमानोऽहङ्कारः"( अ० को०का० १ व० ७ श्लो० २२ ) इत्यभिधानाद्गर्वादिवाचकाहङ्कारविषयत्वात् । तथाभूताहङ्कारस्तु प्राकृत एव । तद्वाचकशब्दस्याव्ययरूपत्वान्मकारान्ताच्च । आत्मवाचिनस्तु शब्दस्य दकारान्तत्वादस्मच्छब्दसिद्धत्वाच्च महान्विशेष इति विवेक इति दिक् ।

किञ्चास्तां तावत्सुषुप्त्यादावहमर्थस्य व्यभिचारलेशशङ्कावकाशयोगः मोक्षदशायामपि तस्यानुगतत्वेनात्मस्वरूपाभिन्नत्वात् । तथाहि, प्राकृतप्रलये विश्वलयावसानेऽवशिष्यमाणस्यैकाऽद्वितीयादिशब्दाभिधेयस्य परब्रह्मणः श्रीपुरुषोत्तमस्य नित्यमुक्तत्वे न कश्चिद्विवादः । तथाच तस्यापि ज्ञात्रभिन्नाहमर्थत्वमेव स्वरूपत्वं श्रूयते "ब्रह्मैवेदमग्र आसीत् स चात्मानं वेदाहं ब्रह्मास्मीति" "बहुस्यां प्रजायेय "नामरूपे व्याकरवाणि त्रिवृतं करवाणि" इत्यादिभिः ।

"निरञ्जनः परमं साम्यमुपैति" इतिश्रुत्या तत्साम्यमापन्नानां तथात्वयोगो निर्विवादः "अभयं वै जनक प्राप्तोसि यदात्मानं वेदाहं ब्रह्मास्मीति अहं मनुरभवं सूर्यश्च" इति श्रुत्यन्तरान्मुक्तानुभवरूपात्।

अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते॥

(भ० गी० अ० १० श्लो० ८)

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।
नचैव न भविष्यामः सर्वे वयमतः परम्॥

(भ० गी० अ० २ श्लो० १२)

इत्यादिना कालत्रयाबाध्यत्वमहमर्थस्य श्रीमुखेनैव निरूपणाच्च। किञ्च सर्वश्रुतिमूलभूतायामपि वेदमातरि गायत्र्यामपि प्रत्यगात्मप्रयोगस्थानेऽस्मच्छब्दस्यैव प्रयोगादपि। ननु बुद्ध्यवच्छिन्नविषयकोऽयमस्मच्छब्दप्रयोगो नात्मस्वरूपविषयक इति चेत्? न, धीशब्दस्य पृथक्प्रयुक्तत्वात्। अथानुमानमपि अहमर्थो मोक्षान्वयी तत्साधनकृत्याश्रयत्वात् चैतन्यादिवत्। अहमर्थोऽनर्थनि(१)वृत्त्याश्रयः अनर्थानाश्रयत्वात् सम्मतवत्। नचासिद्धिः अहमज्ञः अहमनुभवामीत्येवाज्ञानुभवात्। अनात्मत्वं नाहमर्थनिष्ठम् अनात्ममात्रवृत्तित्वाद्घटत्वादिवत्। अहमर्थः आत्मस्वरूपाभिन्नः मोक्षान्वयित्वात्। सार्वज्ञ्यादिवत् इत्यादिप्रयोगाः।

अथ प्रकारान्तरेणास्य श्लोकस्य योजना—अहमर्थे चेतने आत्मनि द्व्यंशता न भातीति अन्वयः। द्व्यंशता नाम चेतनाचेतनयोर्द्वयोरंशौ द्व्यंशौ तयोर्भावो द्व्यंशता, सा चाहमर्थे नास्तीत्यर्थः। ननु अहमर्थोऽन्तःकरणगर्भित एव नात्मस्वरूपमात्रमिति चेत्? न, तथात्वे मम मन इति धीर्न स्यात् तदवच्छिन्नस्य पुनस्तदनन्वयात्। किञ्च एवं मनः स्फुरति मनो नास्तीति ज्ञानादहमिति ज्ञानस्य वैषम्यानुभवो न स्यात् चित्संवलनविषयत्वाविशेषात्। किञ्च सर्वापि भ्रान्तिर्द्व्यंशविषयाऽन्यथानिरधिष्ठानभ्रमापातात्। न चाहमिति बुद्धेर्द्व्यंशत्वमनुभूयते। यदि कल्प्यते तदात्मेति बुद्धेरपि द्व्यंशत्वं कल्प्यताम्। ननु रूप्यं स्फुरति रूप्यमस्तीत्यत्रेवाहं स्फुरामि अस्मीत्येव धीरिति चेत्? न, त्वन्मते ज्ञानस्याप्यध्यस्तत्वेनाधिष्ठानत्वायोगात्। अहमिच्छामीतिवदहंस्फुरामीत्यहमर्थाद्भिन्नत्वेन भासमानस्य स्फुरणस्य तदै-

(१) 'निवृत्त्याश्रयः' आदर्शे।

क्यारोपाधिष्ठानत्वायोगाच्च, बाधकेन बाधिष्यमाणस्याध्यस्तधर्मत्वेन भासमानस्य चास्तित्वस्याधिष्ठानत्वायोगाच्च, त्वदभिप्रेतस्याहमित्यत्रैवांशद्वयमित्यस्यासिद्धेः। तस्मान्नाहमर्थस्य ध्वंशत्वे मानमित्यभिप्रेत्य विशिनष्टि-*चेतने इति*। प्रत्यगात्मस्वरूपे इत्यर्थः। तत्र प्रत्यक्षं प्रमाणयन् विशिनष्टि-*अहंप्रतीतिविषये इति*। पूर्वमेव व्याख्यातार्थः। अपिशब्दोऽनात्मनिरासार्थः। सोऽपि वर्णितः। उक्तार्थे प्रथमं परमताभिप्रेतं हेतुमाह-*त्वच्छरीरमिति हेतुवर्णनादिति*।"य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष ते आत्मान्तर्याम्यमृतः" इत्यादिश्रुतेः। स्वाभिप्रेतसिद्धान्तमाह-*मन्य आत्मपरिशीलने कुत इति*। अस्यार्थः पूर्वमेव विस्तृतः। आत्मस्वरूपविचारे चेतने प्रत्यगात्मनि ज्ञानस्वरूपे तदात्मकत्वानुभवाश्रये ज्ञाते कुतो ध्वंशता (१)विषयकलसम्भावनात्वस्यावकाशोऽपीति भावः॥ २१॥

एवमहमर्थस्यात्मनो ध्वंशतासम्भावना प्रत्यक्षानुमानशास्त्रैरेव निरस्ता, अथानेनेदानीं दृष्टिसृष्टिवादिकुतर्ककल्पनां निराकरोति—

(२)पारशून्यपरधाम तेऽऽद्भुतं चिद्घनं जयति लोकमूर्धनि।
व्यापकं च परिखा सरिद्वराऽचिन्त्यशक्ति नवमङ्गलध्वनि॥१७॥
(३)सत्प्रसङ्गवललभ्यभक्तितो लभ्य एव रसमूर्तिमान् भवान्॥
संमुखा ननु भवन्ति ये न ते तेनियन्ति निरयान् विपद्गणान्॥१८
(४)अक्षमेव सबलं प्रमाणतो यद्यपीह कथयन्त्यपूर्वजाः॥
त्वत्स्वरूपगुणवर्णने विभो! वाक्यमेव सबलं प्रतीयते॥ १९॥
(५)एकधा च बहुधा प्रदृश्यते यत्र यत्र तव बिम्बमात्मनः॥
उत्तमश्च खलु भाग्यवत्सु सः सोऽपि युक्ततम एव सद्वरः॥२०॥
(६)ध्वंशताऽपि नच भाति चेतनेऽहंप्रतीतिविषयेऽहमर्थके॥
त्वच्छरीरमिति हेतुवर्णनान्मन्य आत्मपरिशीलने कुतः॥२१॥

---

(१) 'विषयकासम्भावनात्वे साव' आदर्शे।

(२) अयं श्लोकः ८९ पृष्ठे १२ पङ्क्तावपेक्ष्यते। (३) अयं श्लोकः ८८ पृष्ठे २७ पङ्क्तावपेक्ष्यते। (४) अयं श्लोकः ९१ पृष्ठे ९ पङ्क्तावपेक्ष्यते। (५) अयं श्लोकः ९४ पृष्ठे २६ पङ्क्तावपेक्ष्यते। (६) अयं श्लोकः ९६ पृष्ठे ३० पङ्क्तावपेक्ष्यते।

दृष्टिसृष्टिरपि नैव सम्मता दर्शनात्तत्र फलं यतः स्थिरम् ॥
सार्थको भवति यत्र शब्दकः सर्व एव परदेवताऽऽत्मनि ॥२२॥

*दृष्टिसृष्टिरपीति* । यच्च बौद्धाभिमतक्षणिकत्वासिद्ध्यर्थमुक्तं विश्वस्य दृष्टिसृष्टिः देवदत्ते सुप्ते तद्देहादिकं तं प्रति नास्त्येव, जाग्रतो यज्ञदत्तादेस्तु तद्भ्रान्त्या भाति, प्रत्यभिज्ञा तु सोऽयं दीप इत्यादि वद् भ्रान्तिरिति । तत्राह—दृष्टिसृष्टिरित्यादि । वेदस्य तद्विदुषां चेतिशेषः ।

जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इतिस्वप्रत्यभिवचनेन बौद्धप्रज्ञादिना विश्वस्य स्थायित्वप्रतिपादकविवरणवचनेन च विरोधात् । दृगन्यस्य सर्वस्य दृष्टिसृष्टित्वे तत्तत्कार्यस्य प्रतीतिमात्रशरीरत्वेन नियततत्तत्कारणाजन्यत्वे श्रुतिषु स्वर्गाद्यर्थं ज्योतिष्टोमादिविधेः ब्रह्मसाक्षात्कारार्थं श्रवणादिविधेराकाशादेर्वाय्वादिहेतुत्वोक्तेश्चायोगाच्च, तवापि तृप्त्यर्थं भोजने परप्रत्यायनार्थं शब्दोच्चारणादौ च प्रवृत्त्ययोगेन स्वक्रियाविरोधाच्च । यदि तूक्तश्रुत्यादिकमपि स्वप्नश्रुत्यादितुल्यमिति न पर्यनुयोज्यं तर्ह्यद्वैतश्रुतिस्तन्मीमांसादिकमपि तथेति न तेनाद्वैतसिद्धिः, दृष्टिसृष्टिपक्षे घटादेः स्वज्ञानात्पूर्वमसत्त्वेन प्रतिकर्मव्यवस्थानुपपत्तेश्च, शुक्तेदमंशस्यापि रूप्यवदिदं रूप्यमिति ज्ञानात्प्रागसत्त्वेन संप्रयोगादिहेतुत्रयजन्यत्वरूपस्याध्यासतटस्थलक्षणस्य सत्यस्य मिथ्यावस्तुसंभेदावभासत्वरूपस्वरूपलक्षणस्य चायोगात्, इदं रूप्यमिति ज्ञानकाले शुक्तित्वादेरभावेनाध्यासस्य तदज्ञानकार्यत्वादिप्रक्रियाविरोधाच्च, इदं रूप्यं नेदं रूप्यमिति ज्ञानयोर्भिन्नविषयत्वेन बाध्यबाधकभावानुपपत्तेश्च, रूप्यादिबाधस्यापि दृष्टिसृष्टित्वेन रूप्यादिमिथ्यात्वासिद्धेश्च, सुषुप्तिप्रलयादौ जीवब्रह्मविभागस्यातीतत्वेनाविद्यमानतया प्रत्यहं प्रतिप्रलयं मुक्तस्य पुनः संसारित्वापाताच्च, सुप्तं प्रति संस्कारादेरप्यभावेन तस्य पुनरुद्बोधायोगाच्च, मोक्षस्यापि दृगन्यत्वेन स्वाप्नमोक्षवत दृष्टिसृष्टिमात्रत्वापाताच्च, चिन्मात्रस्यैव घटादिसृष्टित्वे तस्यैव सदा प्रतीत्यापत्त्या विशिष्टस्य तत्वे वाच्ये तस्यापि

विशिष्टस्य दृष्टिसृष्टित्वेऽनवस्थादिप्रसङ्गाच्च, उक्तन्यायेन दोषाज्ञानद्रष्टृदेहेन्द्रियादीनामभावे भ्रान्त्ययोगेन तेषामपि दृष्टिसृष्टित्वेऽनवस्थापाताच्च, घटादेर्दृष्टिसृष्टिरित्यस्यापि दृष्टिसृष्टित्वेन घटादेरदृष्टिसृष्ट्यापाताच्च। सोऽयं घट इत्यादिप्रत्यभिज्ञाविरोधाच्च, दीपादौ परिणामादिभेदस्येवेह बाधकस्याभावात्, तदभावेऽपि भ्रान्तित्वे च घटादेरप्येकस्मिन्नपि क्षणे भेदस्यात्मनोऽपि प्रतिक्षणं भेदस्य च प्रसङ्गात्, सोऽयं देवदत्त इत्यादिदृष्टान्तेन तत्त्वमस्यादौ जहदजहल्लक्षणयैक्यपरत्वोक्त्ययोगाच्च, अभेदस्यापि दृष्टिसृष्टित्वेन तज्ज्ञानस्य बाधकत्वायोगाच्च, "ध्रुवा द्यौः ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ध्रुवं विश्वमिदं जगत्" इत्यादिश्रुतिविरोधाच्च, भिन्नत्वेन प्रतीतस्य घटपटादेरभेदे अभिन्नत्वेन प्रतीतस्य प्रतिक्षणं भेद इति दृष्टिहान्यदृष्टिकल्पनापाताच्च। तस्मान्निर्बाधप्रत्यभिज्ञानात् "ध्रुवं विश्वम्" "अश्वत्थः सनातनः" "सत्यस्य सत्य" इत्यादिश्रुतेः सत्त्वाच्चावरस्य असद्व्यपदेशादिति चेत ? न, "धर्मान्तरेण वाक्यशेषात" इति सूत्रात्।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।

(भ० गी० अ० १५ श्लो० १)

इत्यादिस्मृतेश्च दृष्टिसृष्टिपक्षः पापीयान् प्रमाणहीनत्वादिति तात्पर्येणाह-*यतस्तव दर्शनात्स्थिरं फलमिति*। यतो यस्मात्त्वाचिन्त्यानन्तस्वाभाविकस्वरूपगुणशक्तेः श्रीभगवतः पुरुषोत्तमस्य दर्शनात् साक्षात्कारानुभवात् स्थिरं शाश्वतं फलं त्वद्भावापत्तिलक्षणमोक्षाख्यं श्रूयते, तस्माद् दृष्टिसृष्टिः शास्त्रसंमता न भवतीत्यन्वयः। "ब्रह्मविदाप्नोति परं" "यदापश्यः पश्यते रुक्मवर्णं" "कर्तारमीशं पुरुषं ब्रह्मयोनिं" तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "जुष्टं यदा पश्यत्यन्यमीशं तन्महिमानमिति वीतशोकः" इति श्रुतिभ्यः,

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥

(भ० गी० अ० १८ श्लो० ५५)

मत्प्रसादादवाप्नोषि शाश्वतं पदमव्ययम्।

(भ० गी० अ० १८ श्लो० ५६)

इत्यादि स्मृतिभ्यः, "तन्निष्ठस्य मो(१)क्षव्यपदेशात्" (ब्र० सू० १-१-५-७) इति न्यायाच्च । किञ्च शास्त्रसार्थक्यान्यथानुपपत्तिरप्यत्र मानमित्याह-*सार्थको भवति यत्र शब्दकः सर्वं एव परदेवतात्मनीति* । यत्र यस्मिन् दृष्टिसृष्टिपक्षनिरासे सर्वोऽपि शब्दः उभयकाण्डरूपः "ज्योतिष्टोमेन यजेत स्वर्गकामः" "आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिरूपः सार्थकः अर्थेन सहितः सार्थको भवति, अन्यथा तस्य वैयर्थ्यप्रसङ्गादित्यर्थः । क्वेतिशङ्कानिरासार्थं तद्विषयमाह-*परदेवतात्मनीति*। परदेवश्चासावात्मा चेति तथोक्तस्तस्मिन् । विषये सप्तमी । परदेवतेतिकर्मकाण्डसमन्वयार्थं विशेषणम् । आत्मेति ब्रह्मकाण्डसमन्वयार्थसङ्ग्रहः । देवानां ह्यन्तर्यामिणि पूर्वकाण्डस्य समन्वयः विश्वात्मनि चोत्तरकाण्डस्य समन्वय इति विवेकः । यद्वा, परदेवतात्मनि ।

"तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥"

इत्यादिश्रुतेः श्रीपुरुषोत्तमे भगवति सर्वोऽपि शब्दः सार्थकः । तत्रोत्तरकाण्डस्य साक्षात्तत्स्वरूपगुणादिप्रतिपादनेऽन्वयः, पूर्वकाण्डस्य तु परम्परया तत्प्राप्तिसाधनज्ञानशक्त्यादिजनकत्वेनेत्यर्थः, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन" इति श्रुतेः । ननु प्रपञ्चजातं दृष्टिसृष्टिमात्रमेव मानसिद्धं, प्रपञ्चो मिथ्या दृष्टिसृष्टिमात्रत्वात् स्वाप्नसृष्टिवदित्यनुमानात् । "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इत्यादिश्रुतेः अद्वैतश्रुतिप्रामाण्यान्यथानुपपत्तिरप्यत्र मानं बोध्यमिति चेत् ? न, उक्तानुमानस्य दृष्टान्तविकलत्वात् स्वाप्नसृष्टेरपि परमेश्वरनिर्मितत्वेन मिथ्यात्वासिद्धेः । ननु "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते, न तत्रानन्दा मुदः प्रमोदा भवन्त्यथानन्दान् मुदः प्रमोदान् सृजते, न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते, स हि कर्त्ता" इतिश्रुतेः स्वाप्नसृष्टेः जीवकर्तृकत्वावगमात् । तथाच तस्य तु बह्वल्पकालस्थायित्वमप्यविरुद्धमितिचेत् ? न, स्वप्नश्रुतेरपि

(१) मोक्षोपदेशात् सूत्रपाठः ।

परमेश्वरकर्तृत्वविधानपरत्वात् । तथाहि, स्वाप्नरथपुष्करिण्याद्यर्थं जातं सकलेतरपुरुषाननुभाव्यतया तत्तत्कर्मानुसारेण तत्तदेकैका-नुभवार्हं यत्किञ्चित्कालस्थायि वस्तु परमात्मैव सृजते तथाभूता-श्चर्यसृष्टिः सत्यसङ्कल्पं परमेश्वरं विनाऽन्येषु कर्मवश्येषु संसार-चक्रभ्रममाणेषु क्षेत्रज्ञेषु कथमपि नोपपद्यते ।

तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन ॥

इतितत्रैवोपक्रमोपसंहारयोः परमपुरुषासाधारणलिङ्गविधानात्, सहिकर्त्तेति च तया श्रुत्यैक्याधर्याच्च । न हि "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण" इति श्रुत्युक्तं सर्वेषु सुप्तेषु जागरणं यथासङ्कल्पं सृष्टिकरणं सर्वलोकाश्रयत्वं सर्वानतिक्रमणी-यत्वं च तदसाधारणे लिङ्गं संसारिणि क्षेत्रज्ञविशेषे कथमप्युपप-द्यतेऽसम्भवात । तस्माज्जीवानामल्पाल्पकर्मानुगुणफलानुभूत्यर्थं ता-वन्मात्रकालावसानात् तदेकानुभाव्यानर्थविशेषान् श्रीपुरुषोत्तम-निर्मितानेव जीवः स्वप्नेऽनुभवति न स्वयं सृजते । किञ्च स्वाप्नस्य शुभाशुभयोः सूचकत्वमपि श्रुतेरवगमात् स्वाप्नसृष्टेः परमात्मसृ-ज्यत्वमेव,

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिंश्च (१) स्वप्नदर्शने ॥ इति,

"अथ यदा स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इति श्रुतेः। सूचकत्वं च स्वसङ्कल्पायत्तस्य नोपपद्यते । अन्यथा तदनु-भवस्यानिष्टत्वात् शुभसूचकमेव सदा(२)सृष्ट्वा शुभमेव सदानुभवेत् । तस्मान्न जीवकर्तृकत्वम् । स्वाप्नपदार्थस्य सत्कर्तृकत्वसत्फलक-त्वाभ्यां सदेव विश्वमिति सिद्धम् । तथैव दार्ष्टान्तिकेऽपि जाग्रत्सृ-ष्टिः परमात्मकर्तृकैव "यत्रैष सुप्तोऽभूत्" इति सुप्ताधारत्वेनोक्तस्य ब्रह्मणः सर्वस्रष्टृत्वमुच्यते नतु सुप्तोत्थिताज्जीवात् । अन्यथा वाक्य-शेषे "नाड्यो द्वादशसप्तसहस्राणि हृदयात्पुरीततम्" इत्यादिना सुप्तौ नाड्यादिभावोक्तिः "यथोर्णनाभिः सृजते" "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गाः" इत्याद्युक्तिः अत्रैव वाक्ये "सर्वे लोकाः सर्वे प्राणाः" इत्याद्युक्तिश्चायुक्ता स्यात् । नहि ऊर्णनाभितन्त्वग्निविस्फुलिङ्गदृष्टा-

(१) 'स्वप्ननिदर्शने' आदर्शे । (२) 'पृष्ट्वा' आदर्शे ।

न्तो दृष्टिसृष्ट्यनुगुणः। तस्मान्न कल्पितं जगदपि [तु] सदेव ब्रह्म सृज्यत्वात्, अर्थक्रियाकारित्वान्यथानुपपत्त्यापि तस्य सत्त्वादिति सिद्धम्। अद्वितीयश्रुतेरपि न प्रपञ्चमिथ्यात्वे मानत्वं तस्याः कारणैकत्वनिर्धारणपरत्वेन नैराकाङ्क्ष्यात् । नाप्युक्तान्यथानुपपत्तेरत्र प्रामाण्यं, कारणैकत्वप्रतिपादनेनैव तदुपपत्तेरुक्तत्वात्। ननु अर्थक्रियाकारित्वं सत एवेति न नियमोऽसत आरोपितत्वेनापि तत्सिद्धेरिति चेत्? न, असत आरोपासम्भवात्। एकत्र सत एवान्यत्रारोपनियमात्। न हि स्वरूपेणासतः शशशृङ्गादेः क्वचिदारोपो दृष्टः श्रुतो वापि केनचिद्विदुषा देवानां प्रियेण । ननु आरोपे तद्विषयकप्रतीतिमात्रमपेक्षितं न विषयसत्त्वमपीति चेत्? न, असतः प्रतीतेरेवासम्भवात्। ननु रज्जौ सर्पप्रतीतिरिव प्रपञ्चप्रतीतावपि दोषमात्रमेव कारणमपेक्षितं न विषयसद्भाव इति चेत् ? न, दोषात्मककारणस्यापि असत्यत्वाविशेषेण प्रतीतिरूपकार्यजनकत्वायोगात्, कार्यस्य कारणसत्तासापेक्षत्वनियमात्, कुत्राप्यसतः कारणत्वादर्शनाच्च । न चासतोऽप्यारोपितसर्पस्य भयकम्पादिजनकत्वदर्शनात् कार्यस्य कारणसत्तापेक्षितत्वे व्यभिचार इति वाच्यम्, स्वरूपेणासतः कारणत्वासम्भव एव। अन्यथा मरुमरीचिजलेन मृगादितृष्णानिवृत्तिः, गुञ्जारोपितवह्निना शीतनिवृत्तिः, अमृतत्वबुद्ध्या भुक्तविषान्मरणाभावः, चाण्डालस्य ब्राह्मणत्वारोपाद्वेदाधिकारः, तत्कृतज्योतिष्टोमाद्विना तस्य स्वर्गादिप्राप्तिश्च स्यात्। उक्तभ्रमस्थलेऽपि आरोपितसर्पविषयकज्ञानस्यैव भयकम्पादिहेतुत्वं नतु विषयस्येति। नचासतोऽपि रज्जुसर्पादेर्ज्ञानजनकत्ववद्भयादिकारणत्वस्यापि सम्भवात् किमिति नाङ्गीकार इति वाच्यम्, तत्रापि सतो दोषस्यैवासद्विषयकज्ञानजनकत्वान्न विषयस्येति भावः। ननु असत्योऽपि स्वाप्निकस्त्रीसङ्गो वीर्यपतनं सुखानुभूतिं च जनयति, प्रतिबिम्बं च बिम्बसाधकं, रेखारोपितवर्णश्चार्थसाधको वर्णदैर्घ्यादिकं च नगो नाग इतिभेदस्य ज्ञापकं, शङ्काविषस्य मरणहेतुत्वं, सवितृसुषिरादीनां चानिष्टादिसाधकत्वं दृश्यते इति चेत्? न, अत्रापि सत्यस्यैव हेतुत्वान्नोक्तशङ्कावकाशः। तथाहि स्वाप्नस्त्रीसङ्गजन्यसुखादौ न तावदसती स्त्री तत्र हेतुः, किन्तु तज्ज्ञानं तज्जन्यसंस्कारश्च, तस्य च सत्त्वात्, बालस्य तद्विषयकज्ञानाभावेन व्यभिचारात्। अ-

न्यथा बालस्यापि सुखादि किमिति नोत्पद्यते इति त्वयैव विचार्यताम्। बिम्बाभाववद्वृत्तित्वरूपव्याप्तेः प्रतिबिम्बे सत्त्वात् तज्ज्ञानस्यैव सतो बिम्बानुमितिजनकत्वाच्च; रेखायाश्च वर्णे पदस्यार्थे इव सङ्केतितत्वे-नं रेखास्मारितवर्णस्यैव बोधकत्वात् रेखावर्णज्ञानवतामपि बोधात्, दीर्घत्वादिकं वर्णगतं सत्यमेव। तार्किकमते नानादीर्घादयोऽनि-त्याः वर्णा अपि सिद्धान्ते नित्या एव, शास्त्रयोन्यधिकरणभाष्ये त्व-याऽपि तस्य नित्यत्वाङ्गीकारात्, दीर्घत्वादिज्ञानस्यैव हेतुत्वेन म-तान्तरेऽप्युपपत्तिसम्भवात्; तज्ज्ञानजन्यशङ्कानिमित्तभयजन्यधा-तुव्याकुलत्वस्यैव मरणहेतुत्वान्न विषभक्षणस्य, तस्य तु स-त्यत्वमेव; सवितृसुषिरज्ञानस्यैवानिष्टादिहेतुत्वे तस्य तु स-त्यत्वमेव सत्येऽप्यर्थे तदज्ञाने च भयाद्यभावदर्शनात्। अपि च परमेश्वरपाल्यत्वादपि प्रपञ्चस्य सत्यत्वम्। तथाहि, ईश्व-रस्य प्रपञ्चमिथ्याविषयकापरोक्षं त्वयाभ्युपगम्यते नवेति विवेचनी-यम्। नाद्यः, मिथ्यात्वेन ज्ञाते तत्र पालनप्रवृत्त्यसम्भवात्। द्वितीये परमेश्वरे भ्रान्तत्वापत्तेः, सार्वज्ञनाशापत्तेः, "यः सर्वज्ञः सर्ववित्" इत्यादिशास्त्रव्याकोपाच्च। नन्वैन्द्रजालिकवत्तस्य मिथ्यावस्तुपाल-नं भवत्विति चेत्? न, असम्भवात्। ऐन्द्रजालिकवस्तुमन्त्रौषधा-दिबलादतीतानागतान् देशान्तरस्थितांश्च सत एव पदार्थान्प्रद-र्शयत्येव न त्वपरोक्षतया जानाति पालयति वा। नन्वैन्द्रजालिकस्य स्वमायया मोहितस्य तदा परोक्षाभावे 'पश्यन्त्विदमात्रफलम्' इत्या-दिव्यवहारानुपपत्तेस्तस्य तद्विषयकापरोक्षं स्वीकार्यं, तद्दृष्टान्तेन परमेश्वरस्यापि तत्पालनं प्रवृत्तिघटनादिति चेत्? न, यथा वैद्यो गु-रूपदेशादिना ज्ञातौषधप्रभावो रोगनाशापरोक्षाभावेऽपि इदमौषध-मिमं रोगमाशु नाशयति तद्भावं पश्यन्त्विति वदति तथैन्द्रजालिको-ऽपि अस्मान्मन्त्रादेवैते भ्राम्यन्तीति ज्ञातमन्त्रादिप्रभावः पश्यन्त्वि-ति वदति। नचैन्द्रजालिकान्तरात् स्वसृष्टा असतीति वाच्यम्, भ्रम-जनकस्वमन्त्रौषधादिगतसामर्थ्यस्यैव रक्षणात्। ईश्वरस्य तु सर्वत्र सर्वदा सर्ववस्तुविषयकापरोक्षानुभवाश्रयात्कथमपि मिथ्याव-स्तुपालने प्रवृत्त्यसम्भवात्। एतेनैन्द्रजालस्यासत एवार्थक्रियाका-रित्वदर्शनादुक्तार्थसिद्धिरित्यपि निरस्तम्। तत्रापि मन्त्रौषधादीनां सद्रूपाणामेव कार्यजनकत्वात्। तत्सिद्धं जगतः परसृज्यत्वादर्थ-

क्रियाकारित्वाच्च सत्यत्वमिति दिक् ॥ २२ ॥

नाश्रयो न विषयो भवान् यतोऽज्ञानतोऽपि करुणानिधे!तव ॥
सत्स्वरूपमत आमनन्ति हि विग्रहं परममङ्गलं परम् ॥ २३ ॥

इदानीं पूर्वनिरस्तासु परोक्तासु युक्तिषु मध्येऽवशिष्टा अज्ञानाश्रयविषयकाः परबुद्ध्युत्प्रेक्षिताः काश्चन युक्तयो निरस्यन्ते-*नाश्रय* इत्यादिना । अज्ञानाश्रयः चिन्मात्रं वा सर्वज्ञो वा जीवो वेति विशये कश्चिदाह-चिन्मात्रमेवाज्ञानाश्रयः तदन्यस्याज्ञानकल्पितत्वेन तदाश्रयत्वासम्भवात् ।

आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ॥

इतिविवरणोक्तेः । दर्पणमुखमात्रसम्बन्धेऽपि प्रतिमुखमालिन्यवत् प्रतिबिम्बे जीव एव संसारो न तु बिम्बे ब्रह्मणि, उपाधेः प्रतिबिम्बपक्षपातित्वादिति चेत्? न, एकविषयज्ञानभावरूपाज्ञानयोः तमःप्रकाशयोरिवात्यन्तविरुद्धत्वात् नाश्रयत्वम् । न हि ज्ञानानिवर्त्यमज्ञानं भवति रूपहानिप्रसङ्गात् । न च वृत्तिज्ञाननिवर्त्यं तत्, विवरणे ऽन्तःकरणपरिणामे ज्ञानत्वोपचारादित्युक्तेनोपचारज्ञानविरोधिनो मुख्यज्ञानत्वायोगात् । अन्यथा "आदित्यो यूपः" इति श्रुत्यौपचारिकसूर्याद्युपलक्षणादपि तमोनिवृत्त्यापत्तेः, औपचारिकत्वसाम्यात् । चेतनस्याज्ञानाविरोधित्वाभ्युपगमे घटादिवत् ज्ञानत्वायोगात् । ज्ञानाज्ञाने हि ज्ञातुरर्थप्रकाशाप्रकाशौ । नच तदविरोधित्वेऽपि व्यवहारादिहेतुत्वात् ज्ञानत्वम्; अज्ञाननिवर्त्तकस्यैव तद्धेतुत्वानुभवात् । नच विवरणे करणव्युत्पत्त्या बुद्धिवृत्तिज्ञानमित्युक्तत्वेनाज्ञानं करणविरोध्येव न तु ज्ञप्तिविरोधीति वाच्यम्, न जानामीति ज्ञप्तिविरोधित्वेनानुभूयमानस्य ज्ञानान्तरत्वापातात्, साक्षिवेद्ये सुखादावज्ञानादर्शनाच्च । नच चैतन्याज्ञानयोः सौरप्रकाशाद्दिवाभीत्यन्धकारयोरिव सत्यत्वमिथ्यात्वाभ्यामविरोधादाश्रयाश्रयिभाव इति वाच्यम्, सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरस्येव चैतन्याप्रकाशविरुद्धतत्समसत्ताकाज्ञानान्तरस्याभावेन तात्त्विकाज्ञानविरोधस्यैव वाच्यत्वात् । अन्यथाऽन्तर्गतसुखरूपरूपस्यात्मनो व्यावहारिकदुःखरूपता स्यात् । किञ्चाहमज्ञ इति धर्मिग्राहकसाक्षिबाधः ।

नचात्मनि स्थौल्याश्रयदेहैक्याध्यासादहं स्थूल इतिवदहङ्कारेण अज्ञानाश्रयचिदैक्याध्यासाद्वा दग्धृत्वायसोरेकाग्निसम्बन्धादयो दहतीतिवत् अज्ञानाहङ्कारयोरेकाचिदध्यासादहमज्ञ इति धीर्भ्रान्तिरिति वाच्यम्, अद्यापि चितोऽज्ञानाश्रयत्वासिद्ध्याऽन्योन्याश्रयात्, दोषाजन्यस्याहमज्ञ इतिसाक्षिज्ञानस्य भ्रान्तित्वायोगाच्च, बाधकाभिमतस्यैव धर्मिग्राहकैतद्बाधितत्वेनैतद्बाधकाभावाच्च, मिथ्यारूप्येदमंशसम्बन्धवदध्यस्ताज्ञानसम्बन्धस्यापि तद्ग्राहकेणैव ग्राह्यत्वाच्च। अज्ञानाश्रयत्वधीबलादहमर्थः कल्पितो वा विद्याया मनुपपत्तिरलङ्कारो वाऽस्तु। किञ्च "निरनिष्टो निरवद्यः शोकं मोहं जरां मृत्युमत्येति नित्यमुक्तः" इत्यादिश्रुतिविरोधः। नापि मौढ्यं न दोषः, नापि बन्धकाज्ञानाश्रयो मुक्तो, नच तात्त्विकाविद्यादेरेव निषेधः, त्वन्मते तस्याप्रसक्तेः जीवेऽपि तदा भावेन जीवब्रह्मणोः सावद्यानवद्यनिरवद्यत्वादिव्यवस्थाश्रुतिविरोधाच्च, मुक्त्यन्वयिचिन्मात्रे जीव इव शोकस्य तात्त्विकस्याभावेऽपि मोहवद्व्यावहारिकस्यापाताच्च। नच श्रुतौ मोहशब्दस्तत्कार्यपरः मुख्यार्थहानेः, तत्कार्यस्य शोकादिपृथगुक्तेश्च। न चेयं श्रुतिः बिम्बस्थानीयब्रह्मपरा, जीवेऽप्यज्ञानाभावेन "ज्ञाज्ञावीशानीशौ" इत्यादिश्रुतिषु जीवेऽज्ञानानीशत्वोक्त्ययोगाच्च, 'यद्भावो मुक्तिस्तच्चिन्मात्रं सावद्यम्, अन्यन्निरवद्यम्' इत्यस्य विरोधाच्च। न चोपाधेः प्रतिबिम्बपक्षपातित्वस्वाभाव्याज्जीव एव संसार इति वाच्यं, श्रुत्यादिविरोधसाम्येऽर्धजरतीयायोगेन चिन्मात्र एवाज्ञानस्यैव च संसारस्याप्यवश्यमङ्गीकार्यत्वात्, प्रतिबिम्ब एव च्छायादिवद्वस्त्वन्तरत्वाच्च; अचाक्षुषेऽस्य चैतन्यस्य गन्धरसादिवत् प्रतिबिम्बतानर्हत्वाच्च, प्रतिबिम्बत्वे जीवस्य समदित्वा(?)द्यापत्तेश्च, सूर्यस्य जल इव मरीचिकाजलेषु अप्रतिफलनेन चिदसमसत्ताकस्याज्ञानस्य चित्तं प्रति उपाधित्वायोगाच्च; अद्रव्यस्याज्ञानस्य प्रतिबिम्बनोपाधित्वायोगाच्च, अविद्यायाश्चिन्मात्राभिमुख्याभावाच्च, उपाधेरज्ञानस्याकाशाद्यात्मना परिणामे प्रतिबिम्बापाताच्च, मुखप्रतिमुखानुगतमुखत्वातिरिक्तमुखमात्ररूपव्यक्त्यन्तरजीवब्रह्मानुगतचित्त्वातिरिक्तचिन्मात्ररूपस्याज्ञानाश्रययोग्यव्यक्त्यन्तरस्य चाभावाच्च, अनादिभावो न निवर्त्ततइति सामान्यव्याप्तेरज्ञानं ज्ञानानिवर्त्यमितिविशेषव्याप्तेरिवोपाधिः प्रतिबिम्बपक्षपातीति

सामान्यव्याप्तेरज्ञानं स्वाश्रय एव भ्रान्त्यादिहेतुरिति विशेषव्याप्त्या बाधाच्च ।

किञ्चोपाधेः प्रतिबिम्बपक्षपातित्वं किन्तत्र स्वधर्मप्रतिभासकत्वं वा स्वकार्यप्रतिभासकत्वं वा स्वकार्यनिष्ठधर्मप्रतिभासकत्वं वा प्रतिबिम्बं प्रति स्वविषयाच्छादकत्वं वा ? नाद्यः, मालिन्यादेर्दर्पणनिष्ठत्ववत् सुषुप्त्याद्यनुवृत्तस्याविद्यावच्छिन्नस्वरूपस्य वा तत्प्रतिबिम्बितस्वरूपस्य वा सुषुप्त्याद्यनुवृत्तस्य कर्तृत्वप्रमातृत्वादिरूपस्य वा संसारस्याज्ञाननिष्ठत्वाभावात् ज्ञानक्रियासंस्काराणां च त्वन्मते अज्ञानस्थत्वेऽपि नित्यातीन्द्रियाणां तेषामात्मनि कदाप्यप्रतीतिः । त्वन्मतेऽपि ह्यविद्याबन्धकाबद्धो नतु बद्धा (?)

न द्वितीयः, विच्छेदादेरुपाधिकार्यस्य बिम्बे महाकाशे च दर्शनात्, मुखस्य बिम्बनादेः ब्रह्मस्थसार्वज्ञादेश्चानौपाधिकत्वापाताच्च, प्रतिमुखगतस्थौल्यादेरुपाधिकार्यत्वेऽपीह जीवगतस्य संसारस्यानादित्वेन कार्यत्वाच्च ।

न तृतीयचतुर्थौ, दर्पणघटादावदृष्टेः ।

एवं बुद्धिरूपोपाधेरपि न प्रतिबिम्बपक्षपातित्वं, तस्य प्रतिबिम्बपक्षपातिजपाकुसुमस्थानीयत्वेन तस्य पक्षपात्यादर्शस्थानीयत्वाभावात् ।

नन्वस्तु तर्हि चिन्मात्रस्यैवाज्ञानं संसारश्च, तदन्यस्य मिथ्यात्वेन मोक्षसमानाधिकरणबन्धायोगात्, नित्यमुक्तश्रुतिस्तु बिम्बस्थानीयब्रह्मपरेति चेत् ? न, घटदर्पणौपाधिकयोः परिच्छिन्नत्वमालिन्ययोरवच्छिन्नाकाशप्रतिबिम्बयोरिवाकाशमात्रमुखमात्रयोरदर्शनेनावच्छेदपक्षे प्रतिबिम्बपक्षे चायोगात्, बिम्बे ब्रह्मणीव प्रतिबिम्बेऽपि संसाराभावेन जीवब्रह्मणोः संसारासंसारव्यवस्थाश्रुत्ययोगाच्च ।

ननु जीवो नावच्छिन्नो नापि प्रतिबिम्बः किन्त्वविद्यया ब्रह्मण एव जीवत्वम् ।

राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्त्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥

इतिवार्त्तिके "कश्चित्किल राजपुत्रो व्याधगृहे संवर्धित" इति बृहदारण्यकभाष्ये च व्याधवर्धितराजपुत्रदृष्टान्तोक्त्या ब्रह्मैव

स्वाविद्यया संसरति स्वविद्यया मुच्यत इति स्वीकारात्। नित्यमुक्तश्रुतिस्तु तत्त्वतः कदापि संसाराभावाभिप्रायेति चेत्? न, यादृशः कल्पितोऽप्यनर्थरूपः ज्ञानेनोच्छेत्तव्यो बन्धः स एतदभावस्यैव, तदर्थत्वेन कल्पितेनापि संसारेणास्पृष्टचैतन्याभावे नित्यमुक्तत्वश्रुतेर्निर्विषयत्वापातात्। अन्यथा मुक्तौ शोकाभावश्रुतिरपि शोकस्य तात्त्विकत्वनिषेधपरा स्यात्। असर्वज्ञत्वादिनाऽनुभवसिद्धाज्जीवादन्यस्य चेतनस्याभावेन सर्वज्ञत्वादिश्रुतेर्निर्विषयत्वापाताच्च, बहुजीववादे ब्रह्मभावरूपमुक्तेरपुमर्थत्वापाताच्च, एकवादेऽपि जीवब्रह्मणोः संसारासंसारादिव्यवस्थाश्रुतिविरोधाच्च, तयोर्व्यावहारिकभेदस्याप्यभावेन त्वन्मतेऽपि तत्पराभिः "द्वा सुपर्णा" · "य आत्मनि तिष्ठन्" इत्यादिश्रुतिभिः, ।

तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप।

(भ० गी० अ० ४ श्लो० ५)

इत्यादिभिः स्मृतिभिः, "उभयेऽपि भेदेनैनमधीयते" (ब्र० सू० १-२-५-२०) "भेदव्यपदेशाच्चान्यः" (ब्र० सू० १-१-८-२२) "अधिकं तु भेदनिर्देशात्" (ब्र० सू० २-१-७-२२) इत्यादिसूत्रैः, "तस्माच्छरीरादन्य एवेश्वरः, आत्मनो हि तावुभौ चेतनौ एकः कर्त्ता भोक्ता, अन्यस्तद्विपरीतो ऽपहतपाप्मत्वादिगुणः" इत्यादित्वद्भाष्येण "तत्त्वज्ञानसंसरणे चावदातत्वश्यामत्वादिवन्नैकत्रावतिष्ठते" इत्यादिविवरणादिग्रन्थैश्च विरोधाच्च। किञ्च चिन्मात्रस्याज्ञानं स्वाभाविकं चेत्? आनन्दादिवन्न निवर्त्तेत। औपाधिकत्वे उपाधिः स एव चेत्? आत्माश्रयः। अन्यश्चेत्? अन्योन्याश्रयश्चक्रकापत्तिश्चानवस्था चेति। तस्मान्न चिन्मात्रस्याज्ञानाश्रयत्वम्। नापि सर्वज्ञस्याज्ञानाश्रयत्वं बालभाषितत्वात् सूर्योऽन्धकाराश्रय इतिवाक्यवत्तस्योपहासमात्रत्वात्। एतेन सर्वज्ञत्वं भ्रान्त्या प्रमाणतो वा स्वपक्षत्या वा त्रिविधमप्यविद्यासिद्धम्। भ्रान्तेश्च प्रमातृत्वादेश्चाविद्यामूलत्वात् असङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेः। उक्तं हि—

स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम्।

तच्चोभयं विनाऽविद्यासिद्धतीति निरस्तम्। अविद्यारहितस्यैव सार्वज्ञश्रवणात् "तुरीयं सर्वदृक्" इत्यादिना। "यः सर्वज्ञः सर्ववि-

त्"इत्यादिश्रुतयोऽपि शुद्धविषयका एव। अविद्याप्रयुक्तं सार्वज्ञमिति त्वौन्मत्तजल्पितमेव, प्रमाणशून्यत्वात्, एकैकविषयकज्ञानाज्ञानयोर्विरोधस्यानुद्धाराच्च, स्वरूपज्ञस्तः स्वतः कालाद्यसम्बन्धे असत्यत्वापातेन स्वतः सर्वसम्बन्धभावेऽसर्वगतत्वापातेन चाविद्ययेव स्वत एवान्येनापि सम्बन्धोपपत्तेश्च। असङ्गत्वश्रुतिस्तु तद्दोषासंस्पर्शपरा बोध्या।

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।

( भ० गी० अ० ४ श्लो० १४ )

इत्यादिश्रीमुखोक्तेः। एतेन ब्रह्मणो ज्ञानत्वमुपेत्याज्ञानं वदन्तो निरस्ताः। तदुक्तम्—

अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन। इति।

ननु मास्तु ब्रह्मण्यविद्यायोगः, मायायोगस्तु स्यादेव तस्यास्तल्लीलोपकरणत्वादिति चेत्? उच्यते,

माया किमज्ञानविशेषः देवासुरसङ्ग्रामादौ देवादेर्बाह्यसाधनमनपेक्ष्यैव वह्निजलादिविचित्रसद्वस्तुसर्जनशक्तिविशेषो वा ऐन्द्रजालिकस्येवाविद्यमानप्रदर्शनशक्तिर्वा? नाद्यः, उक्तरीत्या सामान्याज्ञानासिद्ध्या विशेषासिद्धिः अज्ञानस्य लीलोपकरणत्वादर्शनात्। सार्वज्ञहानेश्च सार्वज्ञविषयकशास्त्रव्याकोपाच्च, अज्ञाने मायाशब्दप्रयोगादर्शनाच्च। नह्यैन्द्रजालिकोऽपि कस्यचिदज्ञानेनैन्द्रजालं दर्शयति किन्तु मणिमन्त्रादिनैव।

न द्वितीयः, इष्टापत्तेः तत्स्वाभाविकशक्त्यादेः शास्त्रसिद्धत्वात्।

परास्यशक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च।

इति श्रुतेः।

शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः।
शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता।

इत्यादिस्मृतेश्च।

न तृतीयः, व्यामोहनीयजीवादर्शने व्यामोहनायोगात्, कल्पितदर्शनस्य भ्रान्तिं विना ऽसम्भवात्, कल्पितत्वेन तद्दर्शने च तद्व्यामोहनायोगात्, तस्यापि द्वितीयचन्द्रदर्शनस्येवाविद्याविनाऽयोगाच्च। किञ्च

तस्याः शक्तेः सत्यत्वेऽद्वैतहानिः जीवकल्पितत्वे तद्व्यामोहकत्वायोगः, ब्रह्मकल्पितत्वे तु तस्याज्ञानावश्यंभावः। तस्मात्सर्वथाप्यसामञ्जस्यमिति संक्षेपः।

नापि जीवस्याज्ञानाश्रयत्वयोगः, तस्याज्ञानकल्पितत्वेऽन्योन्याश्रयात् तस्य कल्पकस्य शुद्धस्य ब्रह्मणि ज्ञत्वमावश्यकम्। न चाविद्यादौ दौर्घट्यमस्माकं भूषणमिति वाच्यम्, तत्र प्रमाणाद्युक्त्योगात् अविद्याया निराश्रयत्वनिर्विषयत्वात्मस्वरूपत्वापाताच्च, प्रतीत्यनुसारेणाश्रयाद्यङ्गीकारे च घटमहं न जानामीति प्रतीत्यहमर्थाश्रितत्वजडविषयकत्वादिप्रसङ्गबाधाच्च, अनादिनाऽनुपपत्तिपरिहारायोगाच्च, उत्तरास्फुरणे प्रवृत्तिसंवृत्त्यादेर्दौर्घट्यं भूषणमिति स्ववचत्वे सांख्यबौद्धादिमतनिरासायोगाच्च।

दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः।
अन्धं तमोऽप्यलङ्कारो नित्यं दुःखशिरोमणिः॥

इति वचनात्। एतेन—

प्रश्नविश्रान्तिहेतुत्वाच्चोद्यं तमसि नोचितम्।
न बुद्धिमन्तः पृच्छन्ति न जानामीति वादिनम्॥

इतिनिरस्तम्। न ह्यज्ञं प्रति पृष्टं ज्ञानं दौर्घट्यात् ज्ञानमेवाज्ञानपीत्याद्युक्तावपि विरोधाद्यनुद्भावनापातात्, किन्तु ज्ञातुरेव वक्तृत्वादिति। तस्मादनुपपन्न एवानाश्रय इत्यभिप्रायेणाह—*नाश्रय इति*। भवान् सर्वज्ञोऽचिन्त्यानन्तशक्तिगुणाद्याश्रयः स्वभावतोऽस्पृष्टदोषगन्धमाहात्म्यः कथमपि उक्तरीत्याऽज्ञानतो ज्ञानस्याश्रयो न भवतीति यावत्। किञ्च परमतेऽज्ञानविषयोऽपि दुर्घट इत्यभिप्रेत्याह—*न विषय इति*। भवानज्ञानस्य विषयोऽपि न भवतीति योजना। ननु चिन्मात्रस्यैवाज्ञानविषयत्वयोगः तस्याकल्पितत्वेनान्योन्याश्रयादिदोषाभावात्। स्वप्रकाशत्वेन प्रशक्तप्रकाशे तस्मिन्नावरणकृत्यसद्भावाच्च। नाद्यः तस्याज्ञानकल्पितत्वात् जडत्वेन स्वयमेव प्रकाशहीने आवरणकृत्याभावाच्चेति चेत्? न, किन्तावच्चिन्मात्रेऽप्यावरणकृत्यमिति विवेचनीयं, सिद्धप्रकाशलोपो वा सिद्धप्रकाशानुत्पत्तिर्वा? स्वरूपप्रकाशस्य नित्यसिद्धत्वात् तदन्यस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वात्। नापि सतोऽपि प्रकाशस्य विषयासम्बन्धः, ज्ञानस्य विषयसम्बन्धानपेक्षणाच्च। नापि प्राक्-

स्याक्षकार्यप्रतिबन्धः त्वन्मतेऽपि चैतन्यातिरिक्तस्य तस्याभावात्। नापि नास्ति न प्रकाशते इत्यादिव्यवहारः। व्यवहारोऽपि ह्यभिज्ञाऽभिलपनं वा? नाद्यः, नास्तीत्यादिभ्रान्तरावरणसाध्यत्वेनावरणत्वायोगात्। अतएव नान्त्यः, तस्योक्ते भ्रान्तिसाध्यत्वेन भ्रान्तिहेतुत्वावरणत्वायोगात् सुषुप्तौ व्यवहाराभावेनाऽनावरणापाताच्च। नाप्यस्मिन् प्रकाशत इत्यादिव्यवहाराभावः व्यवहारस्याभिज्ञात्वे स्वरूपाभिज्ञाया इदानीमपि सत्त्वाद्भ्रूचेश्च मोक्षेऽप्यसत्त्वात् अभिलपनत्वे मोक्षेऽप्यावरणापातात्! नापि नास्तीत्यादिव्यवहारायोग्यत्वम्, अस्तीत्यादिव्यवहारयोग्यत्वं वा, तयोरप्यारोपितत्वेनावरणं विनाऽयोगात् अद्वितीयादिविशिष्टे तद्व्यवहारेऽपि अवस्थात्रयेऽप्यसन्दिग्धविपर्यस्तत्वेन प्रकाशमानात्मरूपेऽध्यासाधिष्ठाने सुखादिज्ञानरूपे च चिन्मात्रे तत्कल्प्ययोर्योग्यायोग्यत्वयोरभावाच्च, तयोरप्यवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यरूपस्वप्रकाशकत्वविरुद्धत्वेनेदानीमप्यभावाच्च। नचानवच्छिन्नत्वेनापरोक्षव्यवहारयोग्यत्वं स्वरूपेण तु तदयोग्यत्वमित्यविरोधः, स्वरूपस्यास्वप्रकाशत्वापातात्। नित्यातीन्द्रियस्याज्ञानावच्छेदेनापरोक्षव्यवहारयोग्यत्वेन स्वप्रकाशत्वापाताच्च, इच्छाद्यवच्छिन्नप्रकाश इवाज्ञानावच्छिन्नप्रकाशेऽपि विशिष्टस्यापि प्रकाशेनेच्छावदेवाज्ञानस्याप्यावरणत्वायोगाच्च सुखादेरज्ञानावच्छिन्नचित्प्रकाशत्वे सुखादिकं न प्रकाशते इत्यनुभवापातेन सुखादिकं प्रकाशते इत्यानुभवार्थं चितो ज्ञानतानवच्छेदेन प्रकाशस्याङ्गीकार्यत्वाच्च। एतेनाज्ञानविशेषितापरोक्षव्यवहारयोग्यत्वमावरणकृत्यमित्यपि निरस्तम्। नच योग्यतायोग्यत्वयोः प्रकाशाप्रकाशयोः सत्यत्वमिथ्यात्वाभ्यामविरोध इति वाच्यम्, सुखादिस्फुरणं न प्रकाशते इत्यनुभवेन सुखादिसाक्षिणि चैतन्ये आरोपितस्य न प्रकाशत्वस्याभावात्, वन्ह्यावन्हित्वारोपितवह्निकार्यस्यैवाप्रकाशकार्यस्य भ्रान्त्याद्यभावस्यापाताच्च, सतः शुक्तित्वस्यारोपितशुक्तित्वेनाविरोधेऽपि सतोऽधिष्ठानप्रकाशस्यारोपान्तरेण वा प्रकाशारोपेणापि विरोधाच्च। अन्यथा तन्निवृत्तिर्न स्यात्। न चावेद्यत्वे सत्यविरोधव्यवहारयोग्यतात्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वम्, उक्तयोग्यताप्रागभावश्चावरणमित्यविरोध इति वाच्यम्, स्वरूपप्रयुक्तयोग्यताया अनादित्वात्, इदानीं योग्यतास्वरूपप्रकाशस्य प्रागभावः

मोक्षे तु ध्वंस इतिमोक्षेऽप्यप्रकाशापाताच्च । भवति दीपात्पूर्वमिव पश्चादप्यप्रकाशः, एवं स्वप्रभत्वेनापरोक्षव्यवहारार्हः । आत्मनि तद्योग्यभावरूपमविद्यावरणं कथम् ? किञ्च दीपावरकघटवच्चैतन्यावरकाविद्याचैतन्यस्यान्यसम्बन्धं प्रतिबध्नातु अन्यं च प्रति चैतन्यं बध्नातु चैतन्यं प्रत्येव चैतन्ये उक्तयोग्यत्वरूपप्रकाशबोधिनी । न हि दीपो घटावृतोऽपि स्वयं न प्रकाशते तमः सम्बन्धापातात् स्वभावत्यागाच्च । ननु कल्पितभेदं जीवचैतन्यं प्रति शुद्धचैतन्यमाच्छादयतीति चेत् ? न, आवरणं विना भेदकल्पनायोगात्, यो मोक्षे भावी चिन्मात्रस्यैव चिन्मात्रं प्रति प्रकाशः तदभावस्यैवेदानीमज्ञानेन साधनीयत्वाच्च । न च दीपप्रकाश आवृतोऽपि स्वविषयत्वात्प्रकाशते ब्रह्मप्रकाशस्तु न तथेति न प्रकाशत इति वाच्यम्, मोक्षेऽप्यप्रकाशापातात् अज्ञानवैयर्थ्याच्च । तस्मान्न चिन्मात्रात्मा अज्ञानविषयः । नापि देहादिभेदो वा भोक्तृत्वाद्यभावो वा ब्रह्माभेदो वा द्वितीयमात्राद्यभावो वा तद्विशिष्टात्मा वा तद्विषयो भवितुं योग्यः, तेषामात्मस्वरूपमात्रत्वे उक्तदोषाद् भिन्नत्वेऽद्वैतहानेः आविद्यकत्वेऽन्योन्याश्रयादेः । न च ब्रह्माभेदादेः प्रकाशमानात्मत्वमात्रत्वेऽपि कल्पितेन भेदेनाज्ञातत्वमिति वाच्यम्, अधिष्ठानावरणं विना भेदकल्पनायोगादित्यादेरुक्तत्वात् । नच मिथ्याभूतेनापि भेदाभावेन द्वितीयाभावेन चोपलक्षित आत्माऽज्ञानविषय इति वाच्यम्, तस्य समानविषयज्ञाननिवर्त्यत्वेन वेदान्तानामप्युपलक्षणरूपप्रकारयुक्तात्मपरत्वेनाखण्डार्थत्वहानेः अकाके काकवदिति वाक्यवदप्रामाण्यापाताच्च, प्रकाशमानस्यात्मनोऽज्ञानविषयत्वे अप्रकाशमानस्य द्वितीयाद्यभावस्योपलक्षणत्वेन तदविषयत्वे च दृष्टहान्यदृष्टकल्पनापाताच्च । तस्मादात्मनः प्रकाशमानत्वादन्यस्याविद्यकत्वान्नाज्ञानविषयत्वम् । तदुक्तमभियुक्तैः कैश्चित्—

निर्विशेषे स्वयंभाते किमज्ञानवृतं भवेत् ।
मिथ्याविशेषोऽप्यज्ञानसिद्धिमेव ह्यपेक्षते ॥

तस्मान्न कोऽपि अज्ञानविषय इति सिद्धा तद्वादस्याप्रामाण्यान्महत्पापीयस्त्वमनादरणीयं मुमुक्षुभिरित्यलं विस्तरेण ।

प्रकृतं निरूप्यते हे *करुणानिधे* यतो*यस्माद्*भवान्* अस्य *आश्रयो विषयो*वापि नास्ति अत एव अस्मादेव हेतोरज्ञानस्याश्रय-

विषयाभावत्वादेव *तव* अस्पृष्टदोषलेशमाहात्म्यस्यानन्ताचिन्त्या-संख्यातसद्गुणार्णवस्य परब्रह्मणः पुरुषोत्तमस्य *सत्स्वरूपं परम्* क्ष राक्षराभ्यामुत्कृष्टम्*परममङ्गलविग्रहम्* श्रुतयः*आमनन्ति* इति योजना "सत्यं ज्ञानमनन्तं ब्रह्म" "यः सर्वज्ञः सर्ववित्" "य आत्माऽप-हतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः" "सत्य-कामः सत्यसङ्कल्पः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" संसारबन्धस्थि-तिमोक्षहेतुः" "हिरण्यकेशः हिरण्यश्मश्रुः आप्रणखात्सुपर्णः" "य-दात्मको भगवांस्तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मक-ऐश्वर्यात्मकः यथा रजतं वासः" इत्यादयः श्रुतय इति संक्षेपः ॥ २३ ॥

अथानेन श्लोकेन साधनं निरूपयति । तच्च कर्मज्ञानभक्तिप्रपत्ति-गुरूपसत्तिभेदात्पञ्चविधम् । तत्र कर्मयोगस्त्रिविधः नित्यनैमित्तिक-काम्यभेदात् । तत्र "अहरहः सन्ध्यामुपासीत" "यावज्जीवमग्निहोत्रं जुहोति" इत्यादिश्रुत्या नित्यतया विधीयमानं नित्यं सन्ध्योपासन-तर्पणादि यज्ञदानाध्ययनादि च । तत्र यज्ञदानानि त्रैवर्णिकद्विजाति-साधारणानि, याजनाध्यापनादीनि च द्विजाग्र्यासाधारणानि । त-थाच वसिष्ठस्मृतौ—"त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः, तेषां मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धनम् ।

अत्रास्य माता सावित्री पितात्वाचार्य उच्यते । इति,

"गायत्र्या ब्राह्मणमसृजत त्रिष्टुभा राजन्यं जगत्या वैश्यम्" इत्यादिवचनात् तेषां धर्माश्चाह गौतमः—द्विजातीनामध्ययनमिज्या-दानं, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः, पूर्वेषु नियमः, राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं, वैश्यस्याधिक कृषिवणिक्पाशुपाल्यं कुसीदं च" वसिष्ठश्च—"षट् कर्माणि ब्राह्मणस्याध्ययनमध्यापनं [ यजनं याजनं ] दानं प्रतिग्रह-श्चेति । त्रीणि राजन्यस्याध्ययनं यज्ञो दानं च, शस्त्रेण च प्र-जापालनं स्वधर्मस्तेन जीवेत् । एतान्येव त्रीणि वैश्यस्य कृषिः व-णिक्पाशुपाल्यं कुसीदं च" मनुरपि—

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत् ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च ।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशत् ॥

पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥

( मनु अ०१श्लो० ८८-८९-९० )इति । तत्र यज्ञादयो नित्यधर्माः, याजनादयस्तु निष्कामधियां नित्याः, सकामत्वयोगे वृत्तयः । तत्रापि याजनाध्यापनयोर्विद्वद्दयात्रायां तत्त्वम्, अन्यथा स्वरूपहानिः । प्रतिग्रहे सन्निवेशः अन्यथा पृथग्विधानवैयर्थ्यात् । शूद्रस्यत्वेकजातित्वान्नाध्ययनाद्यधिकारः, पादजत्वात् अत्यंहोजत्वाच्च । "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरूतदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" (शु०य०सं०३१-११)इति "न केनापि छन्दस्यशूद्रम्" इति च शास्त्रात् । किन्तु त्रयाणां द्विजानां परिचर्यैव तस्य धर्मः ।

परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।
( भ० गी० अ० १८ श्लो० ४४ )

इति भगवदुक्तेः, "शूद्रश्चतुर्थो वर्ण एकजातिः । तस्यापि सत्यमक्रोधः शौचम् । आचमनार्थे पाणिपादप्रक्षालनमेवैके । श्राद्धकर्मभृत्यभरणम् । स्वदारवृत्तिः । परिचर्याचोत्तरेषाम्" (गौ० ध० १,२, ५१-५७ ) इति गौतमोक्तेः, "तेषां परिचर्या शूद्रस्य" (वा० ध० २-२० ) इति वसिष्ठोक्तेः (१)"परिचर्या शूद्रस्येतरेषां वर्णानाम्" ( आ० ध० १-१-७ ) इत्यापस्तम्बोक्तेः,

एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥

( मनु० अ० १ श्लो० ९१ ) इति मनुवचनाच्चेति ।

"आश्रमधर्माश्च त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव, द्वितीयो ब्रह्मचार्याचार्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्निति सर्वे एते पुण्यलोका भवन्ति । ब्रह्मसंस्थोऽमृतत्वमेति तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा ऽनाशकेन" इत्यादिश्रुतेः । अध्ययनं गुरुसेवा च ब्रह्मचार्यसाधारणं, यज्ञो दानं च गृहिणः, तपो वानप्रस्थस्य, अनाशकं च हितमितभोजनं परिव्राजकस्येति विभागः । अथ शमदमदयाक्षमाऽहिंसातीर्थसेवनोपवासफलाहारदेहशोषणान्नदानादीनि सर्ववर्णादि साधारणानि । फलं कर्तृत्वाभिमानशून्यैर्मुमुक्षुभिरनुष्ठितानां तेषां मनः

( १ ) 'शुश्रूषा शूद्रस्य' पाठान्तरम् ।

शुद्धिपरम्परया ज्ञानभक्तिजनकत्वेन मोक्षसाधकत्वं, कामनायोगे च काम्यकर्मकोटिप्रवेश इति विवेकः । तथाच विष्णुस्मृतौ—

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥ इति ।

बृहस्पतिस्मृतौ च—

दया क्षमाऽनसूया च शौचाऽनायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥
परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्त्तिता ॥
बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् ।
न कुप्यति च वा हन्ति सा क्षमा परिकीर्त्तिता ॥
न गुणागुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्त्तिता ॥
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिर्गुणैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्त्तितम् ॥
शरीरं पीड्यते येन सुशमेनापि कर्मणा ।
अत्यन्तं तन्न कर्त्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् ।
एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।
अहन्यहनि यत्किञ्चिदकार्पण्यं हि तत् स्मृतम् ॥
यथोत्पन्नेन सन्तोषः कर्त्तव्यो ह्यर्थवस्तुना ।
परस्याचिन्तयित्वाऽर्थे साऽस्पृहा परिकीर्त्तिता ॥ इति ।

गौतमस्मृतौ च—"अथाष्टावात्मगुणा दया सर्वेषु, क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा" इति । भारतेऽपि—

सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमार्जवम् ।
ज्ञानं शमो दयाध्यानमेष धर्मः सनातनः ॥
सत्यम्भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्त्तित्वं शौचं सङ्करवर्जनम् ॥

सन्तोषो विषयत्यागो ह्रीरकार्यनिवर्त्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥
ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता ।
दयाभूतहितैषित्वं ध्यानं निर्विषयं मनः ॥

तत्रैव—

आनृशंस्यमहिंसा च प्रवादः संविभागता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एवच ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥ इति ।
शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया ।
विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः ॥

इत्यादिवचनाच्च ।

अथ केनचित्कालादिविशेषनिमित्तेन विधीयमानं श्राद्धादिकं कर्म नैमित्तिकम् । तत्र कालोऽमावास्यादिरूपः, देशश्च गंगागयामथुरादिः । तथाच वैष्णवे-सगरौर्वसम्वादे सनत्कुमारः-

श्राद्धं श्रद्धान्वितः कुर्वंस्तर्पयन्त्यखिलं हि तत् ।
मासिमास्यसिते पक्षे पञ्चदश्यां नरेश्वर ॥
तथाष्टकासु कुर्वीत काम्यान्कालान् शृणुष्व मे ।
श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजम् ॥
श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ।
विषुवे चैव संप्राप्ते ग्रहणे शशिसूर्ययोः ॥
समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ।
नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने ॥
इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ।
अमावास्या यदा मैत्र विशाखास्वातियोगिनी ॥
श्राद्धैः पितृगणस्तृप्तिन्तदाप्नोत्यष्टवार्षिकीम् ।
अमावास्या यदा पुष्ये रौद्रे चर्क्षे पुनर्वसौ ॥
द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ।
वासवाजैकपादर्क्षे पितृणां तृप्तिमिच्छताम् ॥
वारुणं चाप्यमावास्या देवानामपि दुर्लभा ।
नवस्वृक्षेष्वमावास्या यदैतेष्ववनीपत ॥

तदा तृप्तिप्रदं श्राद्धं पितृणां शृणु चापरम्।
गीतं सनत्कुमारेण यदैलाय महात्मने॥
पृच्छते पितृभक्ताय श्र(१)द्धयावनताय च।
वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे।
नभस्यमासस्य तु कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे॥
एता युगाद्याः कथिता पुराणैरनन्तपुण्यास्तिथयश्चतस्रः।
उपप्लवे चन्द्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतत्पितरो वदन्ति॥
माघासिते पञ्चदशी कदाचिदुपैति योगं यदि वारुणेन।
ऋक्षेण कालः सपरः पितॄणां न ह्यस्यपुण्यैर्नृप लभ्यतेऽसौ॥
काले धनिष्ठा यदि नाम तस्मिन् भवन्ति भूपाल तदा पितृभ्यः।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यः॥
तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले तदा यत्क्रियते पितृभ्यः॥
(वि० पु० अंश ३ अ० १४ श्लो० ४-३१)
श्राद्धं परं तृप्तिमुपेत्य तेन युगं समग्रं पितरः स्वपन्ति।
गङ्गाशतद्रुमथवा विपाशां सरस्वतीं नैमिषगोमतीं च॥
अत्रावगाह्यार्चनमादरेण कृत्वा पितॄणां दुरितं निहन्ति।
गायन्ति चैतत्पितरः सदैव वर्षामघातृप्तिमवाप्य भूयः॥
माघासितान्ते शुभतीर्थतोयैर्यास्याम तृप्तिं तनयादिदत्तैः।
चित्तं च वित्तं च नृणां विशुद्धं शस्तश्च कालः कथितो विधिश्च॥
पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छत्यभिवांछितानि॥
पितृगीतांस्तथैवात्र श्लोकाँस्तांच्छृणु पार्थिव।
श्रुत्वा तथैव भवता भाव्यं तत्राहतात्मना॥
अपि धन्यः कुले जायादस्माकं मतिमान्नरः।
अकुर्वन्वित्तशाठ्यं यः पिण्डान्नोनिर्वपिष्यति॥
रत्नवस्त्रमहीयानमहाभोगादिकं (२)वसु।
विभवे सति विप्रेभ्यो योस्मानुद्दिश्य दास्यति॥
अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः।
भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः॥

(१) 'श्रद्धापावनतावच' आदर्शे। (२) 'चक्षुः' आदर्शे।

असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः ।
प्रदास्यति द्विजाग्रेभ्यः स्वल्पाऽल्पांवाऽपि दक्षिणाम् ॥
तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् ।
प्रणम्य द्विजमुख्याय कस्मैचिद् भूप ? दास्यति ॥
तिलैः सप्ताष्टभिर्वापि समवेताञ्जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥
यतः कुतश्चित्संप्राप्य गोभ्यो वापि गवाह्निकम् ।
अभावे प्रीणयन्नस्मान् श्रद्धायुक्तः स दास्यति ॥
सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः ।
सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं नचान्य-
श्राद्धापयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ
कृतौ भुजौ वर्त्मनि मारुतस्य ॥
इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम् ।
यः करोति कृतं तेन श्राद्धं भवति पार्थिव ॥ इति ॥
गयामुपेत्य यः श्राद्धं करोति पृथिवीपते ।
सफलं तस्य तज्जन्म जायते पितृपिण्डदम् ॥
एतत्किलोचुरन्येषां पितरः सपितामहाः ।
केचिदस्मत्कुले जाताः कालिन्दीसलिले प्लुताः ॥
अर्चयिष्यन्ति गोविन्दं मथुरायामुपोषिताः ।
ज्येष्ठामूले सिते पक्षे समभ्यर्च्य जनार्दनम् ॥
धान्यानां कुलजः पिण्डान् यमुनायां प्रदास्यति ॥

इत्यादिना । एतेन स्नानतीर्थयात्रादयोऽपि दर्शिता बोध्याः ।

अथ सकाममधिकृत्य "स्वर्गकामो यजेत्" इत्यादिश्रुत्या । विधीयमानं कर्म काम्यम् । तत्र काम्यानां निषिद्धवत् संसरणहेतुत्वाविशेषात् नित्यनैमित्तिकानां तु श्रीपुरुषोत्तमाज्ञानुवृत्तिरूपभजनत्वादावश्यकमनुष्ठेयत्वम् । तथाच स्वस्ववर्णाश्रमानुसारेणानुष्ठीयमानैर्नित्यनैमित्तकैराराधितो भगवान् वासुदेवः प्रसन्नस्तानुनुष्ठातॄ(१)ननुगृहीत्वा स्वविषयकज्ञानभक्त्योरधिकृत्य स्वात्मानं दर्शयित्वा

(१) अनुगृह्य' इति साधीयः।

स्वभावापत्तिलक्षणां मुक्तिं ददातीति स्वयमेव गीतम्।

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥

(भ. गी. अ. १८ श्लो. ४१)

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥

(भ. गी. अ. १८ श्लो. ४५)

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

(भ० गी० अ० १८ श्लो० ४६) इति।

ननु—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।

इत्यादिना सर्वकर्मत्यागविधानस्यापि साक्षाद्दानात् कथमिव नित्यनैमित्तिकानामवश्यकर्त्तव्यत्वमिति चेत्? सत्यम्, त्यागशब्दस्य फलकर्तृत्वादित्यागपरत्वात्। तथाच तत्रैव—

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः॥
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते।

किञ्च कर्मकर्तव्यताहेयताव्यवस्थापि स्वयमेव निर्णीता श्रीमुखेनैव—

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ इति।
मोक्षार्थी न प्रवर्त्तेत तत्र काम्यनिषिद्धयोः।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया॥

इतिस्मरणाच्च। व्यतिरेके दोषस्मरणाच्च—

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः॥ इति

हरिवंशे बलिं प्रति श्रीवामनः—

वेदोक्तं ये परित्यज्य धर्ममन्यं प्रकुर्वत।
तत्सर्वं तव दैत्येन्द्र मत्प्रमोदाद्भविष्यति॥ इति।

"आचारहीनं न पुनन्ति वेदाः" इति सनत्सुजातः।

श्रुतिस्मृत्युदितं धर्मं वर्णाश्रमविभागजम् ।
उल्लङ्घ्य ये प्रवर्त्तन्ते स्वेच्छया कूटयुक्तिभिः ॥
विकर्माभिरता मूढा युक्तिप्रागल्भ्यदुर्मदाः ।
पाखण्डिनस्ते दुःशीला नरकार्हा नराधमाः ॥

इति विष्णुधर्मे—

नास्तिक्यपरमाश्चैव केचिद्धर्मविलोपकाः ।
भविष्यन्ति नरा मूढा मन्दाः पण्डितमानिनः ॥

इति कलिधर्मे व्यासः । तस्मान्मुमुक्षुभिः स्ववर्णाश्रमधर्मेणैव तत्प्रसादाय सदैवाराधनीयो भगवाँच्छ्रीकृष्ण इति सिद्धम् ।

वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुश्च सेव्यते पन्था नान्यस्तत्तोषकारणम् ॥

इति वचनात् । इत्यलं विस्तरेण । एवं वर्णाश्रमाणां धर्मा संगृहीताः ।

येचानाश्रमिणस्तेषां को धर्म इत्यपेक्षायां पूर्वोक्ताः साधारणाः शमदमतपस्तीर्थसेवनोपवासादयो ज्ञेयाः । इयांस्तु विशेषः-आश्रमही[ना द्वि]विधाः,—आपद्वशादाश्रमभ्रष्टा असक्ता विधुरादय एके, असत्सङ्गाच्च बुद्धिपूर्वकधर्मत्यागिनश्चान्ये । तत्र पूर्वेषां तपोब्रह्मचर्यजपादिनाराधितो भगवान् इ[ष्ट]स्तु गृह्णाति "तपसा ब्रह्मचर्येण श्रद्धयात्मानमन्विष्येत्" इतिश्रुतेः ।

जपेनैव च संसिद्धो ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥
(मनु० २-८७)

इति स्मृतेश्च ।

द्वितीयकोट्या अपि द्विविधाः-तत्र कुसङ्गवलादाश्रमादिधर्मच्युतत्वेऽपि शास्त्रश्रवणादिना प्रबुद्धपूर्वसुकृतसंस्काराः स्वदोषमाकलय्य श्रेयसि प्रयत्ना[न]न्विष्यमाणा एके । तेषामनन्यतया भजनीयो भगवानेवं श्रवणादिना ऽन्यत्रानधिकारात् । तच्च स्वयमेव श्रीमुखेन गीतम्—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।

कौन्तेय ? प्रतिजानीहि न मे भक्तः प्रणश्यति ॥
( भ० गी० अ० ९ श्लो० ३०-३१ )

इत्यादिभिः। एतद्वाक्यव्याख्या वेदान्तरत्नमञ्जूषायां द्रष्टव्यम्।

दुष्कृतबाहुल्याद्धर्मच्युता अपि आत्मदोषं गुणत्वेन बहु मन्यमानाश्चान्ये। तेषां शास्त्रानधिकृतत्वादुपेक्षणीया एव।

नाविरतो दुश्चरितात् न शान्तो नासमाहितः।
नाशान्तमनसो वापि अज्ञानेनैवमाप्नुयात् ॥

इति श्रुतेरिति संक्षेपः।

ज्ञानयोगो नाम पूर्वोक्तकर्मयोगानुष्ठानप्रीणितपरमेश्वरैर्निर्मलमनस्कैः शास्त्राधिकारिभिर्मुमुक्षुभिरभ्यस्यमानश्रवणादिजन्यपरब्रह्मश्रीपुरुषोत्तमस्वरूपगुणादियाथात्म्यविषयकानुभवविशेषः तत्प्रसादहेतुकसाक्षात्कारद्वारेण मोक्षासाधारणहेतुभूतः "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

"यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ॥
इत्यादिश्रुतिभ्यः।

अथ भक्तियोगो नाम पूर्वानुभवपूर्वकवार्षिकगङ्गाप्रवाहवदनवच्छिन्नः अप्राणादहरहः प्रवर्द्धमानो भगवत्स्वरूपगुणादिविषयकध्यानसन्ततिविशेषो निदिध्यासनाख्यो ध्रुवास्मृतिपर्यायकश्च "निदिध्यासितव्यः" "ध्रुवा स्मृतिः" इत्यादिश्रुतेः।

प्रपत्तियोगश्च शास्त्रोक्तज्ञानादिसाधनानुष्ठानस्यासम्भवात् सदाचार्योपदिष्टविधिना करुणावरुणालये रमाकान्ते भगवति श्रीकृष्णे आत्मात्मीयभारार्पणरूपाः "मुमुक्षुर्वै शरणमहं प्रपद्ये" इतिश्रुतेः।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।

इति श्रीमुखोक्तेश्च।

गुरुप्रसत्तिश्च भूपतेरज्ञानामपि कालादिप्रतिबन्धकबाहुल्येनानुष्ठानादेरात्मन्यसम्भवं निश्चित्य श्रीगुरुमेव श्रेयोपायं फलं चावगम्य दृढश्रद्धाविश्वासार्जवादिभिस्तच्चरणारविन्दयोः सर्वात्मभावे-

नात्मभारं स(१)मर्प्याज्ञबालवदुक्तमात्राचरणम् "आ[चा]र्यदेवो भव"

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इत्यादिश्रुतेः । तत्र कर्मयोगः श्रीभगवदाचार्यपादैः सदाचारप्रकाशे निर्णीतः। ज्ञानयोगश्चात्रैव निरूपितः। भक्तियोगश्च "भक्तिरस्तु मम निश्चला हरे" इत्यादिना निर्द्दिष्टः। प्रपत्तियोगोऽपि "त्वां प्रयामि शरणम्" इत्यादिना गुरूपसत्तिश्च वेदान्तरत्नमञ्जूषायां श्रीपुरुषोत्तमाचार्यचरणैर्विस्तृताः।

अत्र ध्यानयोगो वादिनिरासपूर्वकं निर्णीयते-*ध्यानमङ्गमिति*।

ध्यानमङ्गमिति यन्मतान्तरं तन्न युक्तमत एव माधव ! ॥
यद्यपि श्रवणतोऽपवर्गदोऽङ्गं तथाऽपि सुवचं शुभं यतः ॥ २४ ॥

"आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इतिश्रुतेः। तत्र संशयः निदिध्यासनं श्रवणं प्रत्यङ्गं वा श्रवणादेर्वा निदिध्यासनाङ्गत्वं निदिध्यासनस्याङ्गित्वं वा ? किन्तावद्युक्तम् ? श्रवणमङ्गि प्रमाणस्य प्रमेयज्ञानं प्रत्यव्यवधानात् मनननिदिध्यासने तु अङ्गभूते परस्परया तयोः साधनत्वादित्याह-ध्यानं श्रवणस्याङ्गमिति *यन्मतान्तरम्* विवरणकारस्य सिद्धान्तभूतमिति अत्र राद्धान्तमाह-हे *माधव* रमाकान्त अत्र ध्यानस्य युग्मविषयकत्वविधानार्थं माधवशब्दप्रयोगः। *तन्न युक्तम्* असमीचीनम्, अपरोक्षज्ञानं प्रति शब्दस्याव्यवधानवत्त्वाभावात् हेतोः स्वरूपासिद्धत्वेनाभासमात्रत्वात् "नायमात्मा प्रवचने न गरुयो न मेधया न बहुना श्रुतेन शृण्वन्तोऽपि बहवोयं न विद्युः" इतिश्रुतेः, तस्माच्छ्रवणस्य दर्शनानन्वयान्नाङ्गित्वयोगः। ननु द्रष्टव्यः श्रोतव्यः इतिदर्शनाव्यवहितपाठरूपसन्निधानात् श्रवणस्य दर्शनान्वय इतिचेत् ? न, सन्निधानस्य लिङ्गतो दुर्बलत्वात्।

श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ।
संशयं च पराणुद्य(?)लभते ब्रह्मदर्शनम् ॥

इति स्मृत्या श्रवणस्याज्ञाननिवृत्तिद्वारा म(२)ननस्यसंशयविपर्ययनिवृत्तिद्वारा परोक्षनिश्चयसाध्ये साक्षात्कारफलके निदिध्या-

(१) 'समर्प्यानबालव' आदर्शे। (२) 'मननस्यशसंशय' आदर्शे।

त्वेऽङ्गता सिद्धेत्यभिप्रायेणाह-*यद्यपि श्रवणतोऽपवर्गदः* इति। यद्यपि श्रवणेनाप्यज्ञानादिनिरसनद्वारा परम्परया भवानपवर्गद इति, *तथाऽपि* श्रवणमङ्गमेवेति वच एव *शुभम्* समीचीनमित्यर्थः। तथा च निदिध्यासनं ब्रह्मसाक्षात्कारान्तरङ्गसाधनं तत्सिद्धये श्रवणमननेऽपि कर्त्तव्ये इति भावः। "मनसैवानुद्रष्टव्यः" इतिश्रुतेः "ततस्तु तं पश्यन्निष्फलं ध्यायमानः" इतिश्रुतेश्च मनसो ब्रह्मदर्शनकरणत्वं निदिध्यासनस्य तदर्थे (१)एवान्तरव्यापारत्वमिति विवेकः। एवमुभयोरपि श्रुत्योः स्वार्थे एवान्वयसौकर्यम्। ननु "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" "यन्मनसा न मनुते" इत्यादिश्रुतेः ब्रह्मणो गोचरत्वाविधानात् कथमिव मनसो ब्रह्मदर्शनकरणत्वाभ्युपगमसम्भव इति चेत्? सत्यम्, उक्तशास्त्रस्याशुद्धमनोगोचरत्वनिषेधपरत्वात्। अन्यथाऽनयैव श्रुत्या यतो वाच इतिशब्दगोचरत्वनिषेधस्यापि साम्यात्। उभयोरप्यगोचरत्वाङ्गीकारे "आत्मा वा अरे" इत्यादिश्रुतेः निर्विषयत्वापत्त्याऽनिर्मोक्षप्रसङ्गः ब्रह्मदर्शनाभावे चावयोः मोक्षाभावप्रसङ्गसाम्यात्। "तमेव विदित्वाऽतिमृत्युमेति" "ब्रह्म वेद ब्रह्मैव भवति" "ब्रह्मविदाप्नोति परम्"

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति॥

"ऋते ज्ञानान्न मुक्तिः" इत्यन्वयव्यतिरेकशास्त्रबाधाच्च। ननु ब्रह्मदर्शनस्य मनःकरणकत्वाभ्युपगमे तज्जन्यत्वापत्त्याऽनित्यत्वापत्तिप्रसङ्गो दुर्वारः जन्यस्यावश्यनाशयोगादिति चेत्? न, तव पक्षे शब्दकरणत्वेऽपि दोषाविशेषात। न च शाब्दज्ञानस्य तदावरणनाशे एव करणत्वं न तु ब्रह्मसाक्षात्कारे तस्य पूर्वमेव सिद्धत्वादनादित्वादिति वाच्यम्, ममापि ध्यानस्य प्रतिबन्धकनाशार्थमेवाङ्गीकारत्वात् समानत्वात्। तथाच ध्यानसंतत्या प्रीतः श्रीपुरुषोत्तमः स्वप्राप्तिप्रतिबन्धकं छित्त्वा स्वयमेव स्वात्मानं प्रकाशयति इति राद्धान्तः। "यमेवैष वृणुते तेन लभ्यः" "तमक्रतुं पश्यति वीतशोको (२) धातुः प्रसादान्महिमानमीशम्" (श्वे०उ० ३-२०) इत्यादिश्रुतिभ्यः

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्।

इति श्रीमुखोक्तेश्च। "परीक्ष्य लोकान्कर्मजितान्ब्राह्मणो निर्वेद-

---

(१) 'एव सौवान्तर' आदर्शे। (२) 'धतः प्र' आदर्शे।

मायात्। नास्त्यकृतः। कृतेन यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय। येनाक्षरं परमं वेद सत्यं प्रोवाच तं तत्त्वतो ब्रह्मविद्याम्। आचार्यवान्पुरुषो वेद" इत्यादि श्रुतिभ्यः। शास्त्रोक्तलक्षणमुमुक्षुणा लोकपरीक्षाप्रयुक्तविरक्तिसंपन्नेन विश्वासादिभिरुक्तलक्षणं गुरुं शास्त्रोक्तविधिनोपसन्नेन वेदान्तस्य भगवत्स्वरूपगुणादिप्रतिपादनपरत्वं निश्चित्य तत्प्रतिपाद्यं ध्येयस्वरूपं साक्षात्पश्यतः श्रीगुरोर्मुखात्तदनुभूतार्थस्य ग्रहणं श्रवणम्, श्रुतस्य चोपदिष्टार्थस्य सानुभवविषयीकरणाय शास्त्रानुकूलयुक्तिभिर्विचारविशेषो मननम्, मननावधारितस्य साक्षात्कारान्तरङ्गं साधनमनवरतध्यानं निदिध्यासनम्। तस्य चात्यन्ताप्राप्तत्वात् अपूर्वविधिरेवायं निदिध्यासितव्य इतिद्रष्टव्य इतित्वनुवादः। योग्यार्थकतव्यप्रत्ययो बोध्यः। श्रवणमननयोर्ध्यानत्वमितिश्रुतितात्पर्यार्थः। "आवृत्तिरसकृदुपदेशात्"(ब्र०सू०४-१-१-१) इति सूत्रात्।

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा॥
स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित्।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
इज्याचारदयाहिंसादानस्वाध्यायकर्मणाम्॥
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥

इत्यादिस्मृतिभ्यः। "परीक्ष्य लोकान्कर्मजितान्ब्राह्मणो निर्वेदमायात्" इत्यादिश्रुत्या लोकपरीक्षाया निर्वेदहेतुत्वमुक्तम्। तत्प्रकारश्च चिन्त्यते मुमुक्षूपकाराय। तथाहि परीक्षा नाम जगत आदावन्ते च मध्ये वाऽनन्तापारासंख्यविचित्रदुःखसन्तानस्य प्रत्यक्षेण भूयो भूयः स्वात्मन्यनुभूय शास्त्रानुमानाभ्यां सर्वेष्वपि देवतिर्यङ्मनुष्यादिषु क्षेत्रज्ञेषु तथैव दुःखरूपां सन्ततिमवगम्य तत्र दोषदृष्ट्याऽश्रद्धया चालं बुद्ध्या तत्र हेयत्वनिश्चयः, स च निर्वेदासाधारणहेतुः। तत्र-

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।

इत्यादिशास्त्रात् जन्मान्तरसहस्रार्जितपुण्यपुञ्जः ।

जायमानं हि पुरुषं यं पश्यन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥

इत्यादिशास्त्रात् जन्मसमये भगवता स्वासाधारणकारुण्यार्द्रीभूतया दृष्ट्याऽवलोकितो बाल्यादेव प्रवृत्तिमार्गेऽनर्थसन्ततिं मीमांसमानः सत्प्रसङ्गलभ्यकथाश्रवणादिजन्यविवेको वेदोक्तस्वाधिकारानुचरणपरिशुद्धसत्त्वो वक्ष्यमाणपरीक्षायामधिक्रियते । तत्र तावद्दुःखमनेकविधं–तापजं गर्भजन्माद्यवस्थोद्भवं नरकयातनोद्भवं च । तत्र तावैर्जातं तापजम् । तापास्त्रिविधाः आध्यात्मिकाधिभौतिकाधिदैविकभेदात् । तत्राद्या द्विविधाः–शारीरा मानसाश्च । तत्र शिरोक्षिरोगज्वरशूलभगन्दरगुल्मश्वासकासयक्ष्माक्षिरोगातीसारकुष्ठामयच्छर्द्यादिकाः शारीराः । कामक्रोधभयद्वेषलोभमोहविषादशोकासूयावमानेर्ष्यादिभावा मानसाः । मृगपक्षिमनुष्यपिशाचोरगराक्षसादिजन्या आधिभौतिकाः । शीतोष्णवातवर्षाम्बुविद्युदादिकृताश्चाधिदैविकाः । गर्भाद्यवस्थोद्भवं चानेकविधम् । तत्रोल्बवेष्टनभुग्नपृष्ठग्रीवास्थिसंहत्यावस्थानं मलरक्तमूत्रागारे गर्भवासे–अत्यम्लकटुतीक्ष्णलवणादिमातृभक्तरसस्पर्शजम्, अङ्गप्रसारणाकुञ्चनादिविरहजम्, शकृन्मूत्रादिपङ्कशयनजं तत्र जायमानशतजन्मानुभूतदुःखसन्तानविषयकस्मृतिजन्यं चेति गर्भोद्भवम् । अथ प्रबलैः प्रसूतिमारुतैः प्राजापत्योष्णप्रखरवायुना च पीड्यमानास्थिबन्धनस्य कंटकैस्तुद्यमानस्येव क्रकचैर्दारितस्येव यन्त्रे निष्क्रमाणस्येव पूतिव्रणा क्रमेरिव मातृभावे बहिर्मूर्च्छया धरणीपतनजं जन्मावस्थोद्भवम् । ततः सगात्रकण्डूयनपरिवर्त्तनाद्यशक्त्या परेच्छादत्तस्तन्यपानादिजीविकमावृत्ति अशुचिमूत्राद्यार्द्रप्रस्तरशयनदंशमशकमत्कुणादिभिर्भूयो भूयः स्वदशनस्पर्शजादि दुःखं शैशवम । ततश्च कोऽहं कुतः काऽहं किमात्मकः किं हेयं किमुपादेयं किं कार्यं किमकार्यं किं वाच्यं किमवाच्यं को धर्मः कश्चाधर्मः इत्याद्यज्ञानप्रसवं बाल्यादिसमयोद्भवम् । ततश्चासद्भिः पशुसमैः शिश्नोदरपरायणैः सर्वधर्मबहिष्कृतैः संगत्या यथाकामं कर्माचरन् स्वधर्मलोपात् नरकफलककर्माचरणाच्चेहलोकनिन्दनात्पित्रादिशोकावहं दुःखं यौवनं कालोद्भवम् । ततो जर्जरदेहः शिथिलावयवो वि-

गलच्छीर्णदशनः सर्वबलहीनः प्रणष्टदूरदृष्टिर्व्योमान्तर्गततारका नासाविवरनिर्जातलोमपुञ्जः प्रकटीकृतशिरास्थिकतनुर्नतपृष्ठो मन्दजठराग्निरल्पाहारो वृद्धो बहुभोजनाभिलाषोऽल्पचेष्टितः कृच्छ्रचङ्क्रमणोत्थानशयनासनचेष्टितः क्वचित् स्मृतयौवनावस्थाजातसन्तापः क्वचित् क्षणानुभूतवस्तुस्मृतिहीनः पराधीनोत्थापनोपवेशनादिक्रियो भृत्यपुत्रदारादिकृतावज्ञास्पदोऽपक्षीणाखिलशौचे । विहाराहारादिस्पृहाकुलः सर्वबन्धुस्वजनादिपरिहासविषयः पूर्वानुभूतसर्वैश्वर्यादिस्मरणजन्यतापादिगृहीतदीर्घश्वासो ज्वरातीसारादिरोगकदम्बाकुलो मरणोन्मुखोऽपि हिरण्यतनयभार्यागृहादिचिन्तानिमग्नः अपरिमितजरावस्थोद्भवं दुः(१)खमनुभूयते। अथ वक्तुकामो वक्तुमशक्यः पुत्रादिद्रष्टुकामो दृष्टिहीनः श्रोष्टुकामः श्रोत्रहीनोऽसंख्येयवृश्चिकैर्दश्यमान इव शिराभिश्छिद्यमान इव क्रकचैर्विदीर्यमाण इव मूर्च्छितो हस्तपादादि प्रक्षिपन् महद्भिरनिर्वचनीयैः क्लेशैर्देहादुत्क्रामतीति मरणावस्थोद्भवं दुःखं बोध्यम्। ततश्च दृश्यमानैर्यमकिङ्करैर्महाभयानकैः पाशेन बध्यमानोऽतितप्तवालुकावह्नियन्त्रशस्त्रादिसंवलितेन मार्गेण यमलोकं गत्वा तत्र कुठारैः कृन्तनं तप्तभूमौ निखननं शूलारोपणं व्याघ्रादिमुखप्रवेशनं गृद्ध्रादिभिश्चामितो भक्षणं तप्ततैलेषु क्वाथनं क्षारकर्दमपातनं उच्चैर्निपातनादिकं च भुङ्क्ते इत्यादियातनोद्भवम् ।

पुनश्च गर्भे वसति जायते च पुनर्नरः ।

इति शास्त्रात् पुनरुक्तप्रकारेण गर्भप्रवेशादि। एवं संसारचक्रे भ्रमणरूपं दुःखं दुःखसा[ध]नं तच्च गर्भोपनिषदि पुराणेषु च प्रसिद्धम् । तेषु कानिचिद्बाल्ययौवनादिसमये भुक्तानि स्मृत्वाऽवगम्यते इत्थं गतानि दुःखानि मया भुक्तानीति, कानिचेतराद्यवस्थोद्भवानि स्वपितृपितामहबन्धुभिर्वाऽधिकैर्भुक्तानि भुज्यमानानि च, प्रत्यक्षेण काञ्चिज्जन्ममरणोद्भवानि स्वपरपुत्रादिजन्मभिः पित्रादिमरणैश्च लिङ्गैः स्वस्मिंश्चानुमीय अहमपि जन्मदुःखमनुभूतं कर्मतन्त्रत्वात् अस्मत्पुत्रादिवत् । ममापि मरणदुःखमवश्यम्भावि कर्मतन्त्रत्वात् अस्मत्पित्रादिवत् इति प्रयोगात् । कानिचिद्गर्भोद्भवानिपातनजन्यानि

(१) 'दुःखमनुभवति' साधीयान् पाठः ।

शास्त्रमुखेनावगच्छति । एवं सर्वं जगत्प्रत्यक्षानुमानागमैर्दुः(१)खमुपैत्येव परीक्षते । नच स्वर्गादौ देवयोनयोऽपि क्षेत्रज्ञा एव तेषां सुखस्याक्षयत्वं दुःखायोगश्च श्रूयते "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपामसोममसृतावभूम यत्र नोष्णे न च शीतेन ग्लानिर्नाप्यरातयः" इत्यादिभिस्तर्हि कथं दुःखमयं सर्वं जगदितिवाच्यम्? तत्रापि पतनादिभयस्य शास्त्रसिद्धत्वात् ।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
न केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः ॥
स्वर्गेऽपि पातभीतस्य क्षयिणो नास्ति निर्वृतिः ॥

इत्यादिस्मृतेः "तस्मिन् यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तते पथि तमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति इह व्रीहियवौषधिवनस्पतयः तिलमाषा इति जायते" इत्यादिश्रुतिभ्यः । उक्तानां श्रुतीनामर्थवादत्वात्स्वर्गादिप्राशस्त्यपरत्वेनैव नैराकाङ्क्ष्यं व्याख्येयम् । अन्यथा "यथेह कर्मजितो लोकः क्षीयते एव मेवामुत्र पुण्यजितो लोकः क्षीयते नास्त्यकृतः कृतेन" इत्यादिश्रुतिविरोधात् । ननु पूर्वश्रुत्याऽस्या एव संकोच किं[न]स्यात् श्रौतत्वाविशेषादिति चेत्? न,निषेधवाक्यस्य प्रबलत्वात् अनुमानसाहित्याच्च, स्वर्गादयः क्षयिष्णवः कर्मजन्यत्वात् कृष्यादिवदित्यनुमानाच्च ।

शान्तिपर्वणि भीष्मेणोक्तः परीक्षाप्रकारः—

शान्तिपर्वणि यो धर्मो विस्तरेण प्रकीर्त्तितः ।
तं प्रवक्ष्यामि यत्नेन शृणुष्वामितविक्रम ॥
तस्य धर्मसमुद्रस्य क्षोभितस्य समन्ततः ।
नवनीतमिवोद्धृत्य सारं तस्य वदाम्यहम् ॥
गजेन कश्चित्पुरुषः कानने समभिद्रुतः ।
जिघांसाभयसंत्रस्तः प्रविवेश महद्वनम् ॥
अथ पश्यति तत्रस्थं सिंहयूथमवस्थितम् ।
तं दृष्ट्वा सन्निवर्तेन दिशमन्यामधावत ॥
तत्रापश्यत्खड्गहस्तां भीमकन्यां च दारुणाम् ।
आधावतीमभिमुखं तिष्ठ तिष्ठेति चाब्रवीत् ॥

---

(१) 'धुःखयपेत्येन परीक्षते' आदर्शे ।

तां दृष्ट्वा सन्निवर्त्तेन दिशमन्यमधावत ।
तस्यामपश्यत्तत्रस्थं प्रदीप्तं वनमग्निना ॥
स तत्र चिन्तयामास अहो कष्टमवस्थितम् ।
इतो गज इतः सिंह इतः कन्यान्वितो दवः ॥
निराशो जीविते प्राप्तस्तत्र कूपमपश्यत ।
कक्षापतनमत्यन्तमन्धकारमनूदकम् ॥
स तत्र कूपे पुरुषः पपात भयपीडितः ।
अथालोकयतस्तत्र सर्पं कूपतले स्थितम् ॥
विजृम्भमाणं घोरास्यं श्वसन्तं लेलिहाननम् ॥
वल्लीमादाय राजेन्द्र तले तिष्ठन्नधोमुखः ॥
अलाबुरिव तत्रासौ तस्यां वल्यां प्रलम्बितः ।
तस्या वल्यास्तु मूलानि व्यच्छिनत्तत्र मूषकः ॥
उपद्रवास्तु तत्रान्ये दंशका मत्कुणादयः ।
तत्राप्यन्यद्रसोत्पन्नं क्षौद्रं मधुकरावृतम् ॥
तप्तं तद्वाल्पमानं तु घृष्यमाणमभिद्रुतम् ।
अपिबन्मधु तत्रस्थं पतितं तस्य मूर्द्धनि ॥
पतितं मस्तके तस्य मधु तन्मुखमाविशत् ।
पतितं मस्तके सर्वमपिबत्स पिपासितः ॥
यथा स पुरुषो वत्स घोरे वर्त्तति सङ्कटे ।
तथा शरीरिणः सर्वे घोरे वर्त्तन्ति संशये ॥

अथास्यविवरणम्—

योऽसौ गजो महावीचिर्विद्धि देहि हिताहितम् ।
सिंहान् भोगान्विजानीहि विहाराहारसम्भवान् ॥
असिहस्ता तु या कन्या सा जरा दुरतिक्रमा ।
यो दावाग्निः स शोको वै लोभमोहभयाश्रयः ॥
कूपस्तु मानुषो लोकः क्ष्मालो जगदुपद्रवः ।
आयुर्वल्ली तथा प्रोक्तं मूषको मृत्युरुच्यते ॥
योऽसौ कूपतले सर्पः समयः काल उच्यते ।
कामं मधुरसं विद्धि संशयो नात्र विद्यते ॥
मधुन(?) आयिषत्स्वाद्य कामस्वाद्यो हि स स्मृतः ।
एवं श्रुतगुणो वत्स धर्मोत्कृष्टमतिर्भव ॥

संशयेनाजितात्मा त्वं मोक्षं यासि यथाक्रमम्।
एवं संसारकूपस्य धर्म एव परा गतिः॥

मोक्षधर्मे सुलभा—

यथा जतु च काष्ठानि पांसवश्चोदबिन्दवः।
सुश्लिष्टानि तथा राजन् प्राणिनामिहसम्भवः॥

(म० भा० शां० ३२५। ९७)

ततोऽहं त्वं च राजेन्द्र ये चाप्यन्ये शरीरिणः।
बिन्दुन्यासादयोऽवस्थाः शुक्रशोणितसम्भवाः।
यासामेव निपातेन कललं नाम जायते।
कललाद्बुद्बुदोत्पत्तिः पेशी वा बुद्बुदात् स्मृता॥
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः।
सम्पूर्णे नवमे मासि जन्तोर्जातस्य मैथिल॥
जायते नामरूपत्वं स्त्रीपुमान्वेति लिङ्गतः।
ज्ञातमात्रन्तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि॥
कौमारं रूपमापन्नं रूपवानुपलभ्यते।
कौमाराद्यौवनं चापि स्थाविरं चापि यौवनात्॥
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते।
कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे॥
वर्त्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते।

(म० भा० शां० ३२५। ११५-१२१)

तत्रैव सनत्कुमारः—

सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः।
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः॥

(म० भा० शां० ३३७। १४।)

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं प(१)श्वानिलसमन्वितम्।
रजस्वलमनित्यं च भूतावासमिमं त्यज॥

(म० भा० शां० ३३७ :४२-४३)

---

(१) 'समाविष्टं रोगायतनमातुरम्, पाठान्तरम्।

तत्रैव भीष्मः—

प्रजापतीनृषींश्चैव मार्गांश्चैव बहूंस्वरान् ।
सप्तर्षींश्च बहून् ज्ञात्वा राजर्षींश्च परंतप ॥
सुरर्षीन्महतश्चान्यान् ब्रह्मर्षीन् सूर्यसन्निभान् ।
ऐश्वर्याच्च्यावितान् दृष्ट्वा कालेन महता नृप ॥

( म० भा० शां० ३०७ । २८-३० )

वैतरण्यां च यद् दुःखं पतितानां यमक्षये ।
योनीषु च विचित्रासु संसारानशुभांस्तथा ॥
जठरे चाशुभे वासं शोणितोदकभाजने ।
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ॥
शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे ।
सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ॥

( म० भा० शां० ३०७ । ३१-३४ )

सहस्रेषु नरः कश्चिन् मोक्षबुद्धिं समाश्रितः ।

( म० भा० शां० ७०७ । ३९ )

तत्रैवाजगरो मुनिः प्रह्लादं प्रति—

अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं कार्यमवशिष्यते ॥

( म० भा०शां० १७९ । १३ )

जङ्गमस्थावराणां च भूतानामसुराधिप ।
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥
अन्तरिक्षचराणां च दानवोत्तमपक्षिणाम् ।
उत्तिष्ठन्ते यथाकालं मृत्युर्बलवतामपि ॥
दिवि सचरमाणानि ह्रस्वानि च महान्ति च ।
ज्योतींष्यपि यथाकालं पतमानानि लक्षये ॥
इति भूतानि सम्पश्यन्ननुषक्तानि मृत्युना ।
सर्वं समान्यतो विद्वान् कृतकृत्यः सुखं स्वपे ॥

( म० भा० शां० १७७ । १५-१८ )

तत्रैव श्रीशान्ति नारदः शुकं प्रति--

अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥

( म० भा० शां० ३२८ । १ )

अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं (१)प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥
( म० भा० शां० ३३८ । १४ )
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात्सन्तोषमेवेह धनं पश्यन्ति पण्डिताः ॥
( म० भा० शां० ३३८ । २०-२१ )

वैष्णवे श्रीपराशरः—

आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ।
उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥

इत्यारभ्य गर्भोपनिषदन्ताः । तदन्ते च—

गर्भो विलीयते भूयो जायमानोऽस्तमेति च ।
म्रियते जातमात्रश्च बालभावेऽथ यौवने ॥
मध्यमं वा वयः प्राप्य वार्द्धके वा ध्रुवा मृतिः ।
यावज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः ॥
तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत् ।
द्रव्यनाशे तथोत्पत्तौ पालने च तथा नृणाम् ॥
भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ।
यद्यत्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते ॥
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ।
कलत्रपुत्रभृत्यादिगृहक्षेत्रधनादिकैः ॥
क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् ॥

इत्यादिना । एवम्भूतमन्यदपि शास्त्रमत्रानुसन्धेयम् । इत्थं शास्त्रविचारोत्पन्नलोकपरीक्षया दुःखमयं जगत्पश्यन्निर्वेदमाप्नोतीति भावः।

एवं तावन्निर्वेदो द्विविधः—आश्रमक्रमेण जातः सद्यो जायमानश्च । तथाचाम्नायते—"ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यद्वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निको वा। "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इत्यादिभिः । अथोक्तनिर्वेदस्य सत्सङ्गमूलत्वात् सत्सङ्गो नितरां कर्त्तव्यः ।

(१) 'प्रियसंसर्गो' भारत क० ।

यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रतिष्ठिता ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥
दुर्लभा भगवद्योगभाविनो भुवि मानवाः ।
तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदम् ॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥
तस्माद्विष्णुप्रसादाय वैष्णवान्परितोषयेत् ।
प्रसादसुमुखो विष्णुः स्वेनैव स्यान्न संशयः ॥
सम्भाषो दर्शनं स्पर्शः कीर्त्तनं स्मरणं तथा ।
पावनानि किलैतानि साधूनामिति शुश्रुमः ॥
सेव्याः श्रेयोऽर्थिभिः सन्तः पुण्यतीर्थफलोपमाः ।
क्षणोपासनयोगोऽपि न तेषां निष्फलो भवेत् ॥
केवलं भगवत्पादसेवया विमलं मनः ।
न जायते तथा नित्यं तद्भक्तचरणार्चनात् ॥

इत्यादीनि शतशो वाक्यान्यत्रानुसन्धेयानि ।

सतां लक्षणं च भगवद्दिदृक्षैकरतित्वे सति पुरुषार्थचतुष्टयेषणाकालुष्यशून्यत्वम् । वैष्णवे प्रह्लादः—

कृतकृत्योऽस्मि भगवन्वरेणानेन यत्त्वयि ।
(१)भवित्री त्वत्प्रसादेन भक्तिरव्यभिचारिणी ॥
धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि ॥

श्रीनारदपञ्चरात्रे च—

धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपङ्कजं साधो जीवितं दीयतां मम ॥
मोक्षसारूप्यसामीप्यं प्रार्थये न धराधर ।
इच्छामीह महाभाग कारुण्यं तव सुव्रत ॥

इत्यादिवचनादिति सङ्क्षेपः ॥ २४ ॥

प्राप्य जन्म यदि मानुषं नरः सेवते न तव पादपङ्कजम् ॥
धिक् च जन्म कुलमादिदेव ! तद् यौवनादि सकलं न शोभते॥२५॥

॥ इति श्रीसविशेषनिर्विशेषश्रीकृष्णस्तवराजः समाप्तः ॥

(१) 'भवितृं' आदर्शे ।

अथोक्तमार्गबाह्यानां भगवत्पराङ्मुखानां भगवद्भक्तिमेव दृढी-कुर्वन् निन्दामुखेन शास्त्रार्थमुपसंहरति-*प्राप्य* इतिहे *आदि-देव! देवानां ब्रह्मरुद्रेन्द्रादीनाम् आदिः कारणम् । आदिदेवः-"नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादिश्रुतेः। यद्वा आदिश्चासौ देवश्चादिदेवः विश्वकारणभूतो देवः "स कारणं कारणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिपः"। "तं देवतानां परमं च दैवतम्" "एको देवः सर्वभूतेषु गूढः" "सर्वव्यापी सर्वभूतान्तरात्मा" "तद्धदेवमात्मबुद्धिप्रकाशम् " इत्यादिश्रुतेः, "त्वमादिदेवः पुरुषः पुराणः" इति स्मृतेश्च। यो नरो मानुषं जन्म प्राप्य तव पादपङ्कजं न सेवते तस्य जन्मादिकं धिगित्यन्वयः। अत्र नरशब्द प्रयोगः सर्वेषां श्रीभगवदाराधनादौ यथाधर्ममधिकार-सूचनार्थः।

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः"।

इति भगवदुक्तेः। मानुषमितिशब्दोऽस्य श्रुतिस्मृतिश्लाघ्यता प्रदर्शनार्थः। तथाच श्रुतयः-"पुरुषत्वे चाविस्तरा(?)मात्मा सहि विज्ञानेन सम्पन्नतमो विज्ञानं पश्यति विज्ञानं वदति स्वस्तनं वेद लोकालोकौ मर्त्त्येनामृतत्वमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिज्ञानं न विज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुःस्वस्तनं लोकालोकौ"। "ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतन्। तमशनापिपासाभ्यामन्ववर्जन् ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति। ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम्" ( ए० उ० १-२ ) इत्यादयः।

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात् ॥

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदभूमिभागे भवन्ति भूयः पुरुषाः सुरत्वात् ॥
कर्माण्यसङ्कल्पिततत्फलानि विन्यस्य विष्णौ परमात्मभूते।
अवाप्य तां कर्म महिमानमन्ते तमालयं ते त्वमलाः प्रयान्ति ॥

इत्यादिस्मृतयश्च । एवं श्रुतिस्मृतिश्लाघितं देवैरपि प्रार्थ-

नीयं स्वर्गापवर्गासाधारणं श्रेष्ठतमं मानुषं जन्म केनापि भाग्योदयेन यदृच्छयैव भगवत्प्रसादाल्लब्ध्वा तव पादपङ्कजं जगत्कारणस्य ब्रह्मादिकिरीटकोटीडितपादपीठस्य शास्त्रयोनेर्मुक्तोपसृप्यस्य मुमुक्षुध्येयचरणयुगलस्याघ्रातदोषगन्धलेशमाहात्म्यस्य ज्ञानैश्वर्याद्येकालयस्य वात्सल्यसौशील्यदयासौहार्दकारुण्यार्जवमार्दवस्वामित्वाद्यनन्ताचिन्त्यापारिमितस्वाभाविकमहद्गुणार्णवस्य सु(१)दामविप्रमित्रस्य पार्थसारथेर्व्रजजनस्य गोपीमनोहरस्य रुक्मिणीकान्तस्य सत्यभामावक्रोक्तिश्रवणकौतुकस्य शरणागतरक्षणैकव्रतस्य श्रीवासुदेवस्य भगवतस्तवेति पादपङ्कजमिति पङ्कजशब्दप्रयोगस्तस्य सौन्दर्यसौकुमार्यसौगन्ध्यसौरस्यसुस्पर्शत्वादिगुणयोगात् सौलभ्यमाङ्गल्यद्योतनार्थः। तथाचैवं भूतसौन्दर्यादिगुणविशिष्टं ब्रह्मरुद्रेन्द्रादिभ्यः स्वार्चनफलतत्तत्पददानकारणं कमलाभिलालितं गोपीकटाक्षार्चितं तृणचरानुगं परमयोगिहृत्पङ्कजस्थं गौतमपत्नीशापापहं प्रपन्नसंरक्षालब्धदीक्षकं स्वजनैकजीवनं मुमुक्षुध्येयं ध्यात्रभीष्टदानाध्यक्षं गङ्गादितीर्थास्पदं ब्रह्मादिश्वपाकान्तस्याविशेषेण शरण्यं संसाराब्धिपोतमिति यावत् न सेवत इति सर्वपुरुषार्थसाधनसाध्यतया गृहीत्वा आत्मात्मीयार्पणसम्प्रदानतया नाभ्युपगच्छतीति यावत्। तज्जन्मादिकं सर्वं धिक् न शोभते इति, उत्तमकुले ब्राह्मणादिकुले वेदयज्ञाद्यधिकारिणि जातोऽपि तदुत्तमकुलं च जन्म च न शोभते शोभाभाक् न भवति सर्वालङ्कारालङ्कृतशवशरीरवत्। तत्र हेतु माह–*धिगिति* धिक्कारास्पदत्वात्। न केवलं जन्मादिकमेवाशोभनं किन्तु तस्य यौवनादिकं सर्वमपीत्याह—*यौवनादि सकलमिति* यौवनं यूनो भावः सर्वावस्थासु श्रेष्ठस्य ग्रहणमितरावस्थानामुपलक्षणार्थम्, तस्य सर्वाण्यवस्था शवशोभना इति यावत्। आदिशब्दः तेजोबलवीर्यादिग्रहणार्थः। सकलशब्दो लौकिकवैदिकक्रियातद्धेतुभूतज्ञानशक्तिचक्षुरादीन्द्रियपाटवादिग्राहकः। तस्य बहिर्मुखत्वेन तेजोबलादयः लौकिकवैदिकाः क्रियाः ज्ञानशक्तिचातुर्यवैभवादयश्च सर्वेऽपि शवशोभना एव संसारचक्रभ्रमणहेतुत्वःविशेषेण धिक्कारास्पदत्वाविशेषात्। "न चेदवेदीन्महती विनष्टिः"

(१) 'श्रीदाम' आदर्शे।

"असूर्या नाम ते लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याभि गच्छन्ति ये के चात्महनो जनाः॥

"न तं विदाथ य इमा यजानान्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्पाश्चासुतृप उक्थशासश्चरन्ति" "स्वकर्मणा जायते तत्र तत्र मृत्वा पुनर्मृत्युमापद्यतेऽर्द्यमानः स्वकर्मभिः स्वयं धीराः पण्डितं मन्यमाना जघन्यमाना अपि यन्ति मूढाः अन्धैर्नीयमाना यथाऽन्धाः" इत्यादिश्रुतिभ्यः।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः॥
(भ० गी० अ० ७ श्लो० १५)

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥
(भ० गी० अ० ९ श्लो० १२)

तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥
(भ० गी० अ० १६ श्लो० १९-२०)

कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः।
जीवन्मृतास्तु विज्ञेया न स भाष्याः कदाचन॥
मानुष्यं प्राप्य लोकेऽस्मिन्मूको वा बधिरोऽपि वा।
नापक्रामति संसारात् स खलु ब्रह्महा भवेत्॥
लब्ध्वाऽत्र मानुषं देहं पञ्चभूतसमन्वितम्।
मामेव न प्रपद्यन्ते ततो दुःखतरं नु किम्?॥

शुभमिदमुपलभ्यमानुषत्वं सुकृतशतेन वृथेन्द्रियार्थहेतोः।
रचयति कुरुते न मोक्षमार्गं स दहति चन्दनमाशु भस्महेतोः॥

इत्यादिस्मृतिभ्यः। एतदुक्तं भवति-मनुष्यदेहसाध्यं फलं तावत्त्रिविधं नरकस्वर्गापवर्गभेदात्। तत्र वेदविरुद्धाचरणात् तद्विहितत्यागाद्वा नरकापत्तिफलम्। तद्भोगप्रकारश्च पूर्वमेवोक्तः। तथाच "अथै(१)तयोः पथोरेकतरेण तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भू-

(१) 'अथैतयोः यथोनकतरेण' आदर्शे।

तानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत" "तदेष श्लोकः स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः, पञ्चमश्चाचरंस्तैः" "अयं लोको नास्ति न पर इतीमानि पुनःपुनर्वशमापद्यन्ते" "यमं वैवस्वतं संगमनं जनानां यमं राजानम्" इत्यादिश्रुतिभ्यः

सर्वे चैते वशं यान्ति यमस्य भगवन् किल।

इत्यादिस्मृतेः।

अथ "स्वर्गकामो यजेत" इत्यादिवेदोक्तकाम्यकर्माचरणात् स्वर्गाप्तिलक्षणाफलम्। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति। धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते (छा० उ० ५। १०। ३-४-५)

प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्।

"तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे पशुरेव स देवानाम्" इत्यादिश्रुतिभ्यः।

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य विवर्त्तते॥

(भ० गी० अ० ८ श्लो० २५)

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।

(भ० गी० अ० ८ श्लो० १६)

इत्यादिस्मृतिभ्यश्च। अवरोहणप्रकारश्च पूर्वमेवोक्तः अथ जन्मसमये भगवत्कृपाकटाक्षावलोकितो जन्मन एव सात्त्विको निवृत्तिमार्गे प्रवृत्तः स्वोचितवेदोक्ताधिकारानुरूपश्रीभगवदाज्ञारूपतदर्पितनिष्कामधर्मानुष्ठानप्रीणितपुरुषोत्तमप्रसादजन्यश्रद्धादिलभ्यसत्सङ्गतत्प्रसादलभ्यपूर्वोक्तनिर्हेतुकलोकपरीक्षाप्रयुक्तविरागपूर्वकसद्गुरूपसत्तितन्मुखनिर्झरितवेदान्तश्रवणलभ्यपरब्रह्मस्वरूपगुणादिविषयकपरोक्षानुभवस्तदुपदिष्टार्थविषयकमननविगतासम्भावनाविपरीतभावनादिकस्तदनन्तरध्यानप्रसादितश्रीवासुदेवपारिपूर्णानुग्रहस्तन्निवारितस्वाविषयावरणनिवृत्त्या तदपरोक्षाखण्डानुभूत्यार्चिरादिना

तद्भावापत्तिलक्षणमोक्षमापद्यते "साधुकारी साधुर्भवति" "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" "तमक्रतुं पश्यति वीतशोकः" "धातुः प्रसादान्महिमानमात्मनः" "ततः स्तुतं पश्यन्निष्कलं ध्यायमानः परात्परं पुरिशयं पुरुषमीक्षते" "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥

"परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" (छा० उ० ८।३।४) "अथ यदु चैवा(१)स्मिञ्छव्यं कुर्वन्ति यदु नार्चिषमभिसम्भवन्ति" "अर्चिषो हरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति तान्मासान्मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति" (छा० उ० ५।१०।१-२) "एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं(२)मानवमावर्तन्ते न स पुरावर्त्तते" इत्यादिश्रुतिभ्यः।

ननु विदुषोऽर्चिरादिगतिर्नोपपद्यते "तस्य प्राणोऽनुक्रामति अन्यं नवतरं रूपमकुरुत"

प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम्।
तस्माल्लोकात्पुनरेत्यस्मै (?) लोकाय कर्मणे॥

इत्यादिनाऽविद्वद्विषयकगतिशरीरान्तरप्राप्तिभागान्तकपुनरावृत्त्यादिकं निरूप्य "अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्तीति ब्रह्मैव सन्ब्रह्माप्येति" इत्यादिश्रुतिभ्य इति चेत् ? न, 'न तस्य' इत्यत्र तच्छब्दस्य विज्ञानात्मस्वरूपवाचकत्वमेव न शरीरपरत्वम् तथा च विदुषः सम्बन्धिप्राणोत्क्रमणनिषेधो युक्त एव। नचोत्क्रमणस्यापादाननिरूप्यत्वनियमात् षष्ठीनिर्देशाविरोधः अपादानं तु शरीरमेव [न] चेतनम्। अन्यथा षष्ठीप्रयोगो न स्यादिति वाच्यम् अपादानापेक्षायामश्रुताच्छरीरात् सम्बन्धितया श्रुतस्य शारीरस्यैव सन्निहितत्वेनापादानतया ग्रहणेऽपि दोषाभावात्। किञ्च जीवसम्बन्धितया ज्ञातानां प्राणानां सम्बन्धसामान्यवाचिन्याः षष्ठ्या अपादानविशेषपरत्वमपि

(१) 'स्मिञ्छव्यं कुर्वन्ति' आदर्शे। (२) 'मानवमावर्तं नावर्तन्ते' आदर्शे।

समञ्जसम्, विशेषस्य सामान्यातिरिक्तत्वात् नदस्य शृणोतीतिवत्। अन्यथा श्रुतत्यागाश्रुतकल्पनापत्तेः। अस्मत्पक्षे तु माध्यंदिनानामाम्नाये श्रूयमाणापादानप्रयोगस्य पक्षपातित्वान्न विवादावकाशः "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्मात्प्राण उत्क्रामन्ति" इति स्पष्टश्रुतेः प्रतिषेधादिति चेत्? न, "शारीरात्" (ब्र०सू० ४-२-६-१२) "स्पष्टो ह्येकेषाम्" (ब्र० सू० ४-५-६-१३) इति सिद्धान्तसूत्रात्। विदुषः शरीरवियोगसमये प्राणवियोगस्यापि प्राप्तत्वात्तस्यैव निषेधः। प्राप्तस्यैव विषयत्वं निषेधानम्। अन्यथा गतिविधायकश्रुतिस्मृतिकदम्बविरोधापत्तेः। ननु पूर्वत्राप्यार्त्तभागप्रश्ने "अयं पुनर्न मृत्युञ्जयति" इति विद्वांसं प्रस्तुत्य "यत्रायं पुरुषो म्रियते उदस्मात्प्राणा उत्क्रामन्त्याहो नेति पृष्टे नेति होवाच याज्ञवल्क्योऽत्रैव लीयन्ते स उच्छ्वसत्या ध्मायत्याध्मातो मृतः शेते" इत्यादिना प्राणोत्क्रान्तिनिषेधात्कथमेव व्याख्यायते इति चेत्? न, तत्रापि पूर्वोक्तसूत्रानुसारेण षष्ठ्याः प्राणभृत्परामर्शपरत्वात्। अन्यथा सूत्राविरोधेन कामचारव्याख्याया अप्रामाण्यापत्तेः। "उदस्मात्प्राणा" इति शारीरस्यैव प्रश्नेऽपि प्रकृतत्वात्। विदुषो गत्यनन्तरभावित्वात्प्राणवियोगस्य "इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुतेः। गतिश्रुतयस्तु पूर्वमेवोदाहृताः। भारतेऽपि शुकगतिः—

> सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च।
> जगाम भित्त्वा मूर्द्धानं दिवमित्युत्पपात ह॥

याज्ञवल्क्येऽपि—

> ऊर्द्ध्वमेकः स्थितस्तेषां यो भित्त्वाऽऽदित्यमण्डलम्।
> ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्॥
> (या० स्मृ० ३—१६७)

इत्यादिस्मृतयः। वस्तुतस्तु आर्तभागप्रश्ने विदुषः प्रकरणमेव नास्ति ब्रह्मविद्याप्रसङ्गाभावात्। तत्र ग्रहा निग्रहरूपेन्द्रियार्थस्वभावा अष्टौ ग्रहाः कतमे इति पृष्टे "प्राणो वै ग्रहः" इत्यारभ्य "यत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः" इत्यन्तमेकप्रश्नस्योत्तरम्। ततोऽपामन्न्यन्नत्वं "यदि सर्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नम्" इत्यादिना। ततश्च "अपमृ-

त्युञ्जयति" इत्यनेन अपाममग्न्यन्नत्वज्ञानादग्निजय एव मृत्युजय उक्तो न तत्र विदुषः प्रसङ्गलेश इति तत्त्वम्। श्रुत्यर्थस्तु तस्य विदुषः सस्वान्धिप्राणोपलक्षितलिङ्गशरीरं षोडशकलम्, तच्छरीरान्नोत्क्रामति तेन सह गत्वा परब्रह्मणि लीयते "तानि परे तथाह्याह"(ब्र०सू० ४-२-७-१५) इति सूत्रात् "तेजः परस्यां देवतायां पुरुषं प्राप्यास्तं गच्छति" इत्यादिश्रुतेश्च।

ननु भवतु विदुषः अर्चिरादिका गतिस्तथापि कार्यरूपाहिरण्यगर्भाख्यब्रह्मप्राप्तिरेव फलं न परप्राप्तिः विशिष्टदेशवर्त्तिन एव गतिलभ्यत्वात् न सर्वत्र व्यापिनः परिपूर्णस्य सर्वज्ञस्य, तत्प्राप्तौ देशान्तरापेक्षाभावात् "ब्रह्मलोकान्गमयति" इति बहुवचनश्रुतेः "प्रजापतेः सभां वेश्म प्रपद्यत" इतिविशेषश्रुतेश्च "कार्यं बादरिरस्य गत्युपपत्तेः" (ब्र० सू० ४-३-५-७) "विशेषितत्वाच्च" (ब्र० सू० ४-३-५-८) इति सूत्रादिति चेत्? न, अर्चिरादि गत्वा परब्रह्मैव प्राप्नोति "परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति परस्यैव प्राप्यत्वविधानात्, अपुनरावृत्तिश्रवणात् "नच पुनरावर्त्तते" इति श्रुतेः यथोपायप्राप्यत्वात् फलस्य "यथा क्रतुरस्मिल्लोँके भवति तथेतः प्रेत्य भवति" इति श्रुतेः नहि परब्रह्मोपासकस्येतरप्राप्तिसम्भवः। उक्तन्यायविरोधात् अर्चिरादिना मार्गेण गतस्य ब्रह्मलोकातिक्रमेण विधानस्मरणाच्च।

ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्।

इत्यादिना। किञ्च "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृत कृत आत्मा ब्रह्म लोकमभिसम्भवानि" इति श्रुत्या तत्प्राप्यलोकस्याकृतत्वकथनात् सत्यलोकस्य तु प्राकृतत्वात् पुनरावृत्तिमत्वाच्च।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।

इतिस्मृतेः। प्राकृतप्रलये चतुर्मुखस्यापि गतिविधानाच्च।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरं।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

इति स्मृतेः। न च गमनानुपपत्तौ प्रमाणम्, पुरुषोत्तमस्य सर्वगतत्वेऽपि विदुषो विशिष्टदेशगतस्यैवाविद्यानिवृत्तिः शास्त्राद् यथा विद्योत्पत्तौ धर्माचारापेक्षा विविदिषाश्रुतेरवगम्यते तथा निःशेषा-

विद्यानिवृत्तिरूपविद्यानिष्पत्तिरपि विशिष्टदेशगतिसापेक्षेति शास्त्रादेवावगम्यते। उत्क्रान्तिप्रतिषेधपक्षस्तु पूर्वमेव निरस्तः। यत्तु ब्रह्मलोकानिति लोकशब्दबहुवचनाभ्यां विशेषणात्कार्यब्रह्मप्रतीतिरिति तदसत्, निषादस्थपतिन्यायेन ब्रह्मैव लोक इति। सङ्गच्छते बहुवचनमपि तल्लोकस्यानन्तत्वेन तन्महिमाभिन्नत्वेन सन्मानाभिप्रायप्रयुक्तं तत्प्रदेशबहुत्वाभिप्रयुक्तं वेति समञ्जसम्। तस्मात्परमेव प्राप्नोतीति सिद्धम्।

अथ प्रासङ्गिकं समाप्य प्रकृतार्थे शास्त्रं पठ्यते—

जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

(भ० गी० अ० १८ श्लो० ४५-४६)

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥

(भ. गी. अ. १० श्लो. ११)

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥

(भ० गी० अ. ८ श्लो० २४)

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्।

(भ० गी० अ० १८ श्लो० ५६)

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥

(भ. गी. अ. १४ श्लो. २)

बहवो ज्ञानतपसा पूता मद्भावमागताः।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥
मामुपेत्य पुनर्जन्मदुःखालयमशाश्वतम्।

नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥
( भ० गी० अ० ८ श्लो० १५ )

मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ।
( भ० गी० अ० ८ श्लो० १६ )

इत्यादिस्मृतिभ्यश्च "अनावृत्तिः शब्दा" (ब्र० सू० ४-४-७-२२) इतिसूत्राच्च। यस्मादेवम्भूतं मनुष्यदेहलाभ्यफलम्, तस्मान्निषिद्धाचारं निरयप्राप्तिहेतुं हित्वा तद्वदेव काम्यकर्मणः संसरणहेतुत्वसाम्यात् "सर्वे पाप्मानः प्रदूयन्ते" इत्यादिश्रुतौ पुण्यस्यापि पापराशौ निवेश्यत्वेनाम्नातात्त्वच तदपि निषिद्धवत्यक्त्वा श्रेयसे तद्विषयभोगस्य तु शूकरादियोनावपि प्राप्तिसाम्यात् । "अथेतरेषां पशूनामशनापिपासे एवाभिज्ञानम्" इत्यादिश्रुतेः। मानुषत्वेऽपि यदि विषयप्रावण्यमेव पुरुषार्थत्वेनावगतं तर्हि शूकरादिभ्यो विशेषो नास्त्येव । तस्मान्मानुष्यं लब्ध्वा श्रेयसे यतमानैः भगवत्पादारविन्दौ नितरां सेव्याविति सर्वशास्त्रार्थः ।

परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च ।
"उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश"

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथितो ह्यर्थाः प्रकाशन्ते महात्मनः ॥

"यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतिभ्यः ।

अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि ।
न प्राप्नुवन्ति सुगतिं नारायणपराङ्मुखाः ॥
ये नृशंसा दुरात्मानः पापाचाररतास्तथा ।
तेऽपि यान्ति परं धाम नारायणपदाश्रयाः ॥
या वै साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तया विना तदाप्नोति नरो नारायणाश्रयः ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥
( भ० गी० अ० १८ श्लो० ५६ )

इत्यादिस्मृतिभ्यश्च ।

अथोक्तलक्षणनिर्वेदवान् हरिगुरुभक्तिमान् भगवद्भावापत्तिकामो मुमुक्षुरत्राधिकारी, अशेषदोषास्पृष्टमाहात्म्योऽनन्ताचिन्त्यस्वा-

भाविकसद्गुणाब्धिः श्रीभगवान्वासुदेवोऽस्य विषयः, भगवद्भावापत्तिरूपो मोक्षः प्रयोजनम् प्रतिपाद्यं प्रतिपादकभावोऽत्र सम्बन्ध इत्यनुबन्धचतुष्टयं बोध्यम्। "ब्रह्मणो निर्वेदमायात्" "यस्य देवे पराभक्तिः" "निष्काम आत्मकाम" इत्यादि 'सर्वे वेदा यत्पदमामनन्ति" "वेदैश्च सर्वैरहमेव वेद्यः" "शास्त्रयोनित्वात्" "परमं साम्यमुपैति" "पूता मद्भावमागताः" "मद्भावायोपपद्यते" "मम साधर्म्यमागताः" "तत्तु समन्वयात्" "न मामसर्ववचसां प्रतिष्ठा यत्र शाश्वता" इत्यादिश्रुतिन्यायेभ्यः।

श्रीश्रीनिवासस्य पदाम्बुजद्वयं ब्रह्मादिजुष्टं सततं विचिन्तयन्।
विनष्टदोषो भगवत्प्रसादतः परात्परं तन्महिमानमेति वै ॥ १ ॥
रहस्यमेतत्परमं श्रुतीनां विनिःसृतं श्रीगुरुवक्त्रपद्मात्।
भृङ्गायमाणः सततं निषेव्ये मुकुन्दपादाम्बुजगन्धलब्धे ॥ २ ॥
यः सेवते श्रीरमणं गुणार्णवं ह्यस्पृष्टदोषं श्रुतिसारगम्यम्।
ब्रह्मादिवन्द्यं जगदादिकारणं मुकुन्दभावं समुपैति सोऽव्ययम्॥३॥
मङ्गलं रुक्मिणीकान्तो मङ्गलं गोपिकाप्रियः।
मङ्गलं भूपतिः कृष्णो वात्सल्यादिगुणार्णवः ॥ ४ ॥
येनानन्देन नियतं विश्वं भाति चराचरम्।
तं वन्दे नियमानन्दं कृष्णं विश्वगुरुं मुदा ॥ ५ ॥
श्रीहयग्रीव ! विद्यात्मन् ! दामोदर ! सुदर्शन !
श्रीनृसिंह ! धराधार ! दयाब्धे । नृहरेऽव माम् ॥ ६ ॥
मङ्गलं श्रीगुरोर्ध्यानं मङ्गलं तत्पदाम्बुजम्।
मङ्गलं तज्जपो नित्यं मङ्गलं गुणकीर्त्तनम् ॥ ७ ॥

हरिः ॐतत्सदिति श्रीमद्धयग्रीवकृपाश्रयेण श्रीपुरुषोत्तमप्रसादाख्येन वैष्णवेन विरचिता सविशेषनिर्विशेषश्रीकृष्णस्तवराजटीका श्रुत्यन्तकल्पवल्ली नाम समाप्ता ॥

॥ शुभम्भूयात् ॥



# काशीसंस्कृतसीरीज़्-पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नवीनाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परंतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | मूल्यम् । |
|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) | रु० १—८ |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) | रु० ८—० |
| ३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं१) | रु०२—८ |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) | रु० ०—६ |
| ५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । ( व्याकरणं १ ) | रु० ८—० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) | रु० ६—० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया—तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ ) | रु० ०—८ |
| ८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । | रु० ०—८ |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) | रु० ०—१२ |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः। (ज्यो० १) | रु० २—० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) | रु० ०—८ |
| १२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) | रु० १—४ |
| १३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) | रु० १—४ |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि-श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) | रु० १- ८ |

१५ श्रुतबोधश्छन्दोग्रन्थः। आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत-भाषाटीकासहितः। (छंदः १) रु० ०—६

१६ कारिकावली। मुक्तावली-न्यायचन्द्रिकाटीकाद्वयसहिता सटिप्पणा। (न्यायं २) रु० १—०

१७ पारस्करगृह्यसूत्रम्। काण्डद्वये हरिहर-गदाधर० तृतीयकाण्डे हरिहर-जयराम-प्रणीतभाष्येण समलङ्कृतम्। हरिहरभाष्यसहितस्नानत्रिकण्डिकासूत्र—गदाधरभाष्यसहितश्राद्धनवकण्डिकासूत्रैः यमलजननशान्ति-पृष्टोदिवि-शौच-भोजन—कामदेवकृतभाष्यसहितोत्सर्गपरिशिष्टसूत्रैः परिष्कृतं-टिप्पण्यादिभिः सहितं च। (कर्मकाण्डं २) रु० ३—०

१८ संक्षेपशारीरकम्-मधूसूदनीटीकासहितम् संपूर्ण (वेदान्तं४) रु० ८—०

१९ लघुजूटिका-अर्थात् अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः। (व्याकरणं २) रु० ०—८

२० कातीयेष्टिदीपकः। (दर्शपौर्णमासपद्धतिः) महामहोपाध्याय-पं० श्रीनित्यानन्दपन्तपर्वतीयविरचितः। (कर्मकाण्डं) रु० १—०

२१ सप्तपाठि-श्रीशिवमहिम्नस्तोत्रम् श्रीगन्धर्वराज पुष्पदन्ताचार्यविरचितम्। हरिहरपक्षीय-मधुसूदनीटीकया (संस्कृतटीका-संस्कृतपद्यानुवाद-भाषाटीका-भाषापद्यानुवाद-भाषाबिम्ब) पञ्चमुखीनाम्न्या टीकया-शक्तिमहिम्नस्तोत्रेण च समन्वितम्। (स्तोत्रवि० १) रु० १—०

२२ बौद्धाऽऽचार्यश्रीधर्मकीर्तिप्रणीतः सटीकन्यायविन्दुः—भाषाटीकासहितः (बौद्धन्याय वि० १) रु० १—८

२३ सपरिष्कृत-दर्पणसहितवैयाकरणभूषणसारः (व्याकरणं ३) रु० ४—०

२४ न्यायवार्त्तिकतात्पर्य्यटीका-श्रीवाचस्पतिमिश्रविरचिता। सम्पूर्ण (न्यायविभाग ३) रु० ६—०

२५ मीमांसान्यायप्रकाशः (आपदेवीयः) श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिन्या व्याख्यया सहितः (मीमांसा १) रु० २—०

२६ पौरोहित्यकर्मसारः (टिप्पणीसमलंकृतः) प्रथमो भागः श्रीरमाकान्तशर्मणा संगृहीतः। (कर्मकाण्डवि० ३) रु० ०—४

२७ लघुशब्देन्दुशेखरः म० म० श्रीनागेशभट्टविरचितः। अव्ययीभावान्तो भागः, म०म० पण्डित श्रीनित्यानन्दपन्त-पर्वतीयकृतशेखरदीपकाख्येन टिप्पणेन समुज्ज्वलितः। (व्या०४) रु० ४—८

२८ रघुवंशमहाकाव्यम्। महाकविश्रीकालिदासविरचितम् पञ्चसर्गात्मकम्। म० म० श्रीमल्लिनाथसूरिकृतसञ्जीविनीटीकया पं० श्रीकनकलालठक्कुरकृताऽर्थप्रकाशिकाटीकया च समलङ्कृतम् (काव्यवि० ३) रु० ०—१२

२९ कामसूत्रम्। श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम्। बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम्। (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः। न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः। महामहो पाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमनोपाध्यायप्रणितप्रकाशसाहतः (न्यायं४) रु० ६—०

३१ परिभाषेन्दुशेखरः। म० म० श्रीनागेशभट्टरचितः। म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या—तत्त्वप्रकाशिकया टीकया च सहितः। (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः।(मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनाभाष्योपबृंहणम्। परमर्षिभारद्वाजोद्द्योतकरविरचितम्। महर्षि-गोतमादिचरितसम्वलितबृहत्भूमिकासहितम्। (न्यायं) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता। वाजसनेयिमाध्यन्दिनशाखीया। श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता। (भाग १-२-३-४)(वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता। श्रीसायणाचार्यविरचितभाष्यसहिता। १ अध्यायादारभ्य २० अध्यायपर्यन्ता। (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः। श्रीमदप्पयदीक्षितविरचितः। श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः। (वेदान्तं ४) रु० ६—०

३७ काशिका। श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः विद्वद्वर-वामन-जयादित्यविनिर्मिता। (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः। भामहकृतः। श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः। टिप्पण्या च संयोजितः। (व्याकरणं ६) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः। भाषानुवादसमेतः। (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता। ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः। (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः—मेदिनीकारविरचितः। (कोशं १) रु० १—८

४२ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम्। (भाग१—२) (मीमांसा ३) रु० १०—०